

# अथर्ववेदविषयकः प्रस्तावः ।

यस्मादृचो अपातक्षन्, यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमानि, अथर्वाङ्गिरसो मुखम्
स्कम्भं तं ब्रूहि, कतमः स्विदेव सः ॥

( अथर्ववेदे १०-७-२० )

## अथर्ववेद–नामानि ।

अस्य श्रीमतोऽथर्ववेदस्य १ अथर्ववेद, २ ब्रह्मवेद, ३ अङ्गिरोवेद, ४ अथर्वाङ्गिरसां वेद, ५ भृग्वङ्गिरसां वेद, ६ क्षत्रवेद, ७ भैषज्यवेद, इत्येवमादीन्यनेकानि नामधेयानि तत्र तत्र श्रूयन्ते । यथा–

१ अथर्ववेद इति गोपथे 'दा मो देवोरभिष्टय' इत्यारभ्य, 'अथर्ववेदमधीयते' ( १।२९ ) इत्यत्र ।
२ ब्रह्मवेद इत्यथर्ववेदे 'तमृच सामानि यजूंषि ब्रह्म चानुव्यचलन्' ( १५।६।८ ) इत्यत्र ।
३ अङ्गिरोवेद इति शतपथे 'ता उपदिशति अङ्गिरोवेद' ( १३।४।३।८ ) इत्यत्र ।
४ अथर्वाङ्गिरसां वेद इत्यथर्ववेदे 'सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्' (१०।७।२०) इत्यत्र ।
५ भृग्वङ्गिरसां वेद इति गोपथे 'एतद्वै भूयिष्ठं ब्रह्म यद्भृग्वङ्गिरस ' ( ३।४ ) इत्यत्र ।
६ क्षत्रवेद इति शतपथे 'उक्थ यजु साम क्षत्र वेद' ( १४।८।१४।२ ) इत्यत्र ।
७ भैषज्यवेद इत्यथर्ववेदे "ऋच सामानि भेषजा । यजूंषि होत्रा ब्रूम ( ११।६।१४ ) इत्यत्र ।

एतेषु चादित पञ्च नामानि प्राय सर्वत्र प्रयुज्यन्ते, तदन्यानि तु क्वचिदेव । तत्र 'अथर्वा ब्रह्म–अङ्गिरा' इत्यादीनि नामानि सविशेषमुपयुज्यन्त इति तेषां निर्वचनविषयेऽपि किंचिदिवात्र विचार्यते ।

## नाम्नां निर्वचनानि ।

### १ अथर्ववेदः ।

अमीषां अथर्वादीनां नामधेयानां निर्वचनानि गोपथादि-ब्राह्मणग्रन्थेषु निरुक्तादिषु च बहुश उपलभ्यन्ते । यथा—

"अथर्वाणोऽथर्वणवन्त । थर्वतिश्चरतिकर्मा तत्प्रतिषेध ' इति निरुक्ते (निरु० दै० ११।२।१७) तथा गोपथब्राह्मणे तु "अथ अर्वाग् एन आन्विच्छेति, तद्यदब्रवीदथार्वाङेनमेतास्वेवाप्स्वान्विच्छेति तदथर्वाभवत्" इति ( १।४ ) निर्वचनं दृश्यते ।

*

यास्कीयनिर्वचनेन चित्तवृत्तिनिरोधात्मकः समाधिरूपश्चित्तस्थैर्यसाधको योगो लक्ष्यते। गोपथीयव्युत्पत्त्यां तु समीपस्थस्यात्मनोऽर्वागेवान्वेषणं भवितुं योग्यमिति सूच्यते। श्रूयन्ते चैतयोर्निरुक्तयोरनुगतार्थताप्रत्यायकाः केचिन्मन्त्रा अस्मिन्वेदे, यथा—

मूर्धानमस्य संसीव्य, अथर्वा हृदयं च यत्। मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोऽधि शीर्षतः॥२६॥
तद्वा अथर्वणः शिरो देवकोशः समुब्जितः। तत्प्राणो अभि रक्षति शिरो अन्नमथो मनः॥२७॥
ऊर्ध्वो नु सृष्टास्तिर्यङ् नु सृष्टाः। सर्वा दिशः पुरुष आ बभूव।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥२८॥ (अथर्व० १०।२।२६-२८)

इत्यादिषु मन्त्रेषु प्राणनिरोधपूर्वकेण हृदयमस्तिष्कसामञ्जस्यानुष्ठानेन ब्रह्मपुरप्रवेशनं सुस्पष्टं समाम्नातम्। तत्तु पूर्वोक्ताभ्यां व्युत्पत्तिभ्यां सुतरां विशदीभवति। अथ चाथर्वणिकानां निर्मन्थ्याग्निनिर्माणं तद्द्वारा यज्ञपथसंतानने च स्पष्टं वेदेषु। तथा हि—

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। ( ऋग्वेद ६।१६।१४; वा० य० ११।३३ )
अंगिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः॥
( ऋग्वेद १०।१४।६; वा० य० १९।५०; अथर्व० १८।१।५८ )

इत्यादिषु दध्यङ्ङथर्वाणो भृगवश्चैते ऋषय आङ्गिरसगोत्रीया इत्युक्तम्। ते चाथर्वाणोऽग्निं मन्थनेन प्रथमं समुत्पाद्य, यज्ञपथं समतनियतेति श्रूयतेऽन्यत्र—

अग्निर्जातो अथर्वणा। ( ऋ० १०।२१।५ )
इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः। ( ऋ० ६।१५।१७ )
अथर्वा त्वा प्रथमो निरमन्थदग्ने। ( वा० य० ११।३२ )
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः (ऋ० ६।१६।१३; वा० य० १५।२२)
यज्ञैरथर्वा प्रथमः पथस्तते॥ ( ऋ० १।८३।५ )

इत्यादिषु मन्त्रेषु यज्ञमार्गस्य प्रथमप्रवर्तकत्वादेव च यज्ञे माननीयतमं ब्रह्मत्वमथर्ववेदविदेवार्हतीति निष्पद्यते। प्रशस्यते च तस्यैतन्महत्त्विकत्वमुत्तरत्र चिरफलोपवर्णनेन—

तद्भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा। अथर्वा यत्र दीक्षितो बर्हिष्यास्ते हिरण्यये॥
( अथर्व० १०।१०।१७ ) इति॥

## २ ब्रह्मवेदः।

'बृहत्वाद् बृंहणत्वाद्वा ब्रह्मेति' निर्वचनेन ब्रह्मपदेन साक्षात्परं ब्रह्मैव गम्यते, तत्प्राप्तिरेवास्य-वेदस्य साध्यमिति तत्तन्मन्त्रवर्णैः स्फुटतरं बोभवीति। यथा—

न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा। पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते॥ ३०॥
अष्टाचक्रा नवद्वारा देवानां पूरयोध्या। तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः॥ ३१॥
तस्मिन्हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते। तस्मिन्यद्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः॥ ३२॥
( अथर्व० १०।२।३०-३२ )

इत्येतेषु मन्त्रेषु यथावद्ब्रह्मणः स्वरूपवर्णनं वेदस्यास्य ब्रह्मवेद-संज्ञाया अन्वर्थतां प्रथयतीत्यतिरोहितमेव। अतएव—

श्रेष्ठो हि वेदस्तपसोऽधिजातो ब्रह्मज्ञानां हृदये सं बभूव॥ ( गो० ब्रा० १।९ )
एतद्वै भूयिष्ठं ब्रह्म यद्भृग्वंगिरसः। योऽङ्गिरसः स रसः। येऽथर्वाणस्तद्भेषजम्।
यद्भेषजं तदमृतम्। यदमृतं तद्ब्रह्म। (गो० ब्रा० ३।४)

इत्यादौ गोपथब्राह्मणेऽयं वेदो ब्रह्मवेद इत्येव शश्वदुद्दिश्यते। आख्यायते च 'ब्रह्मविद् ब्रह्मैव भवति' इति। अत एतद्विद् ब्रह्मेत्युच्यते।

## ३–४ आङ्गिरसो भिषग्वेदश्च।

आंगिरसं मन्यन्तेऽङ्गानां हि यद्रसः। ( छां० १।२।१० )
आंगिरसोऽङ्गानां हि रसः॥ ( बृ० १।३।८ )
प्राणो वा अंगानां रसः। ( बृ० १।३।१९ )

अङ्गेषु गात्रेषु यो रसः सप्तधातुमयो वर्तते, तमधिकृत्य या चिकित्सा साङ्गिरसानां चिकित्सा। साऽस्मिन्नस्तीत्यय वेदोऽङ्गिरसवेदः सन्नेवांगिरसवेद इत्याख्यायते परोक्षेण। अस्याश्चिकित्सायाः प्रतिपादका मंत्राश्चाथर्ववेदे बहवः श्रूयन्ते। तेषामेकोऽनेकविधचिकित्सां श्रावयति यथा—

आथर्वणीरांगिरसीर्दैवीर्मनुष्यजा उत। ओषधयः प्र जायन्ते यदा त्वं प्राण जिन्वसि॥
( अथर्व० ११।७।१६ )

इत्यादिषु हि मन्त्रेषु *आथर्वणी, आंगिरसी, दैवी, मनुष्यजा औषधयः चिकित्साकल्पाश्च वर्णिता दृश्यन्ते।* एष चांगिरसवेद एव 'भिषजां वेदः' 'भैषज्यवेदः' इति वा प्रसिद्धः।

## ५. क्षत्रवेदः।

क्षत्र-वेद इति संज्ञा चात्र राज्यरक्षणार्थं युद्धादिकस्य समाम्नानेनान्वर्थैव। यद्यप्येता निरुक्तय आर्षत्वादादरणीयतमा एव सर्वेषां, तथापि 'अवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्' इति न्यायेनास्मदीयायां धियां प्रतिभातामभिनवां कांचन निर्वचनसरणिमपीह सङ्कलयितुमुत्सहामहे। यथा—

अथर्ववेदस्यास्य पर्यालोचनाया स्फुटतरं प्रतीयते, यदस्मिन् षट्सहस्रमन्त्रसङ्घात्मकेऽथर्ववेदे ऋषेरथर्वणो मन्त्रसंख्या १७६८, ऋषेर्ब्रह्मणः ९६७, भृग्वङ्गिरसां च ६७० वर्तते। अन्येषामृषीणां मन्त्रसंख्या खिलोऽल्पीयस्येव। यथा यमस्य १४६, सूर्यायाः १३९, शुक्रस्य १०६। एवमन्येषामप्यनेकेषां क्षुद्रसूक्तानां ज्ञातव्या। अतोऽथर्वदृष्टमन्त्रसंख्याभूयिष्ठत्वात् मन्त्रसंघातस्यास्य प्रथमं मुख्यं च नाम 'अथर्ववेदः' इति। तेनैव पथा यथाक्रमं द्वितीयं 'ब्रह्मवेद' इति, तृतीयं 'चांगिरसां वेद' इति। एवं ऋषिप्राधान्यमनुरुध्य प्रसिद्धानीमानि नामानीति युक्तमुत्पश्याम। दृश्यन्ते च ऋग्वेदेऽपि गायुच्छन्दस-गार्त्समद-वैश्वामित्र-वामदेव्यादयो मण्डलानां संज्ञा ऋषिप्राधान्येनैवेति, नात्र किञ्चनासामयिकं मन्यामहे।

## त्रयी।

यत्तु कैश्चिदुच्यते- वेदसमवायस्य त्रयीति नाम त्रयाणां ऋग्यजुःसाम्नामेव बोधकं भवत्यतस्त्रयी-संज्ञकेषु वेदेष्वथर्ववेदस्य संग्रहो न भवितुं योग्य इति, तदसमञ्जसमेव प्रतिभाति, त्रयीतिसंज्ञाया वेदगतमन्त्रत्रैविध्यनिदानत्वात्। ऋग्वेदेऽप्यथर्वणो वर्णनात्। तथाहि—

चत्वारि शृंगा त्रयो अस्य पादाः। ( ऋ० ४।५८।३ )

इत्यत्र 'चत्वारि शृंगाश्चत्वारो वेदा एव चत्वारि शृंगाणी' त्याहभाष्ये भगवान् पतञ्जलिः। यास्कोऽपि वेदा वा एते उक्ताः। ( निरु० परि० १।७ ) इति निरवोचत्। एवमन्यत्रापि-

ऋचां त्वः पोषमास्ते... गायत्रं त्वो गायति .. ब्रह्मा त्वो वदति० ( ऋ० १०।७१।११ )
यज्ञैरथर्वा प्रथमः पथस्तते। ( ऋ० १।८३।५ )

इत्यादिषु ऋङ्मन्त्रेषु अथर्वर्षिकर्तृकाग्निजयकर्तृत्वविशिष्टस्य ब्रह्मणोऽथर्वणस्य समादरेणोत्कीर्तनं दृश्यते, उपवर्ण्यते च ऋग्वेदेऽथर्वण इदं प्रथमतया निर्मथ्याग्निनिर्माणपूर्वकं यज्ञपथप्रथनमिति दर्शितमेव पुरस्तात्।

एतेन पुराथर्ववेदस्य यज्ञे समवायो नासीदित्याधुनिकानामनुमानमपि पराहतम्। विषये चास्मिन्सुबहुवक्तव्येऽप्यवसराभावात्तदन्यत्र वक्ष्यामः।

## अथर्वपरिमाणम्।

१. अथ यत्कैश्चिदुच्यतेऽयमथर्ववेदो दशकाण्डात्मक इति, तन्न विचारसहम्, प्रमाणाभावात्।

२. अन्यैरुच्यतेऽथर्ववेदोऽष्टादशकाण्डात्मकः, तत्रान्त्येष्टिकर्मणः पितृमेधस्य वा समापनात्, इति। अस्मिन्पक्षेऽन्त्ययोः काण्डयोः प्रक्षिप्तत्वं परिशिष्टत्वं वा निष्पादितं भवति।

३. अन्यैः कैश्चिदेकोनविंशतिकाण्डात्मकोऽथर्ववेद इति मन्यते। एकोनविंशस्य काण्डस्यान्ते—

आयुरस्मासु धेह्यमृतत्वमाचार्याय। ( अथर्व० १९।६४।४ )
स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम्।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम्॥ ( अथर्व० १९।७१।१ )
यस्मात्कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम्।
कृतमिष्टं ब्रह्मणो वीर्येण तेन मा देवास्तपसावतेह। ( अथर्व० १९।७२।१ )

इत्येतेषां मन्त्राणां समाप्तिसूचकत्वादत्रैव वेदोऽयं समाप्तिमगमत्। खिलवर्जं विंशस्य काण्डस्य सर्वैकदेशेन ऋग्वेदादेवोद्धृतत्वात्परिशिष्टत्वमेवेत्ययमीषां मतम्।

अथर्ववेदस्य सर्वानुक्रमण्यामप्येकोनविंशकाण्डपर्यन्तमेव ऋष्यादि सङ्कलितम्, विंशस्य काण्डस्य तु ऋग्वेदसर्वानुक्रमणीत एवोद्धृतम्। दृश्यते च तत्रैकोनविंशकाण्डस्यान्ते 'भृग्वंगिरसां ब्रह्मेति भृग्वंगिरसां ब्रह्मेति' इति द्विरुक्तिः पर्यवसानसूचिका। विंशस्य च काण्डस्यारम्भ एव 'ऋषिदैवतछन्दांस्याश्वलायनानुक्रमानुसारेणानुक्रमिष्याम' इति वचनेन तस्य परिशिष्टत्वं ऋग्वेदात् संगृहीतत्वं च सूचितम्। अतोऽयं पक्षः समीचीन इव भाति। विचारणीयैषा विचारसरणिर्विद्वद्भिरिति विज्ञापयामः।

४. अन्ये विद्वांसो विंशतिरेव काण्डान्यस्य वेदस्येति मन्यन्ते। ब्रह्मणो विंशतिऋषयः समभवंस्तैर्विंशतिकाण्डानि दृष्टानीति गोपथेऽनुवर्णनात् ( गो० ब्रा० १-५ )। अस्मिन्पक्षेऽपि विंशं काण्डं ऋग्वेदादेव संगृहीतमिति समानमेव। अत एकोनविंशतिकाण्डात्मकोऽयमथर्ववेद इति पक्ष एव क्षोदक्षमः।

५. दृश्यते च पैप्पलाद-संहितायां काण्डानामेकोनविंशतिरेवेति पर्याप्तमुपबृंहणमत्र।

अस्माभिस्त्वत्र काण्डानां विंशतिरेव मुद्रिता, यतो विंशं काण्डं भवतु नाम परिशिष्टरूपम्, अस्तु वा कुतश्चन सङ्गृहीतम्, तस्याविच्छिन्नाध्ययनपरम्परावलात्, गोपथ उपबृंहणदर्शनात्, वैतानसूत्रादिष्वप्रत्नमन्त्रविनियोगसत्त्वात्, भाष्यकारैः पृथग् व्याख्यातत्वाच्चास्य शौनकसंहिताया अवयवत्वं स्पष्टमेव॥

## शाखाभेदाः।

अथर्ववेदाध्यायिनो हि नवधा भिद्यन्ते- पैप्पलादाः, तौदाः, मौदाः, शौनकीयाः, जाजलाः, जलदाः, ब्रह्मवदाः, देवदर्शाः, चारणवैद्याश्चेति। एषु पैप्पलादादि-शाखासमसु बहवः पाठभेदा वर्तन्ते। केचित्तु वेदस्यास्य पञ्चदश शाखा इति वदन्ति, परन्तु तासां नामानि नोपलभ्यन्ते। निर्दिष्टनवशाखास्विदानीं पैप्पलादानां शौनकीयानां चेति द्वयोरेव संहिते संप्राप्येते। अन्याः शाखासंहिता नूनं लुप्तप्राया एव, तासां प्राप्तये वैदिकैर्यत्नो विधेयः। तत्रैषा शौनकीयानां संहिता प्रकाश्यत इदानीमस्माभिः।

## अथर्वप्रोक्तानि कर्माणि ।

अस्याः शौनकीय-संहिताया गोपथब्राह्मणे कौशिक-वैतान-नाक्षत्र-आङ्गिरस-शांतिक-कल्पानुसारेणानुवाकसूक्त-मन्त्राणां दृश्यते विनियोगो विविधेषु शांतिकेषु पौष्टिकेषु च कर्मसु । तथा-मेधाजननम् ( १।१।१ ), अध्यात्मम् ( १३।१-९ ), ब्रह्मचर्यसंपादनम् ( ११।५ ), ग्रामनगरदुर्गराष्ट्राणां शत्रुतोऽभिरक्षणम् ( १२।१ ), पशुपुत्रधन-धान्यप्रजाकरितुरगादिसंपत्साधनम् ( २।२६; ३।१०, ३।१४; ३।२३, ५।११ ), प्रजानामैकमत्यसंपादकं सांमनस्यम् ( ३।३०, ६।७३ ), राजकर्म, संग्रामजयसाधकं शत्रुसेना-संमोहनोद्वेजनस्तम्भनोच्चाटनादिकम् ( ३।१-२; ७।२०-२१ ), स्वसेनोत्साहाभयरक्षणम् ( ११।९-११ ), संग्रामे जयपराजयपरीक्षणम् ( ४।३१-३२ ), सेनापत्यादिविजयसाधनम् ( ५।३ ), शत्रूत्सादितस्य राज्ञः पुनः स्वराज्यप्रवेशनम् ( ३।३,४।८ ), नवशालानिर्माणम् ( ३।१२; ५।२६; ९।३ ), विविधभैषज्यनिर्माणम्, कृमिनाशनम्, हृद्रोगकामलाश्वित्रादिदोषनिवारणम् ( ३।१२; ५।२६; ९।३ ), विवाहगर्भाधानादिसौभाग्यसंवर्धनम् ( २।३०; ५।२५; ६।११; १४।१-२ ), वाणिज्यलाभसम्पादनम् ( ३।१५ ), स्वस्त्ययनम् ( ६।९३ ), दीर्घायुष्यसम्पादनम ( २।४; ५।२८ ) इत्येवमादीनि जनानामैहिकामुष्मिकफलप्राप्तिसाधकानि सन्ति वेदेऽस्मिन्बहूनि कर्माणि ।

अथर्ववेदे न केवलं ज्वरादिव्याधीनामपि तु सर्वेषामाधीनामपि निवारणोपायदर्शनात्प्रतीयते यद्वेदोऽयमशेषस्य मानुषजातस्य परमोपकारकत्वेन वरीवर्तीति ।

## अथर्ववेदस्योपवेदाः ।

पञ्चोपवेदा भवन्त्यथर्ववेदस्याऽस्य । 'पञ्चवेदान्निरमिमीत सर्पवेदं पिशाचवेदं असुरवेदं इतिहासवेदं चेति ( गो० १। १० ) । एवितिहासपुराणे एवोपलभ्येते इदानीम्, अन्ये तूपवेदा लुप्तप्रायास्ते संशोधकैरन्वेष्टव्या इति । उपवेदविषये च शातपथीयं वचनमिदं दर्शनीयमत्र—

( १ ) मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्ते... गृहमेधिनः, तानुपदिशत्यृचो वेदः ..। ( २ ) यमो वैवस्वतो राजेत्याह । तस्य पितरो विशस्ते... स्थविराः... तानुपदिशति यजूंपि वेदः . । (३) वरुण... आदित्यो राजेत्याह । तस्य गन्धर्वा विशस्ते. युवानः... तानुपदिशति अथर्वाणो वेदः ..। (४) सोमो वैष्णवो राजा... तस्याप्सरसो विशः ताः शोभना युवतयः... ता उपदिशति अंगिरसो वेदः.. । (५) अर्बुदः काद्रवेयो राजा... तस्य सर्पा विशः.. तानुपदिशति सर्पविद्यावेद इति । ( ६ ) कुबेरो वैश्रवणो राजेत्याह । तस्य रक्षांसि विशः... तानुपदिशति देवजनविद्यावेद इति । ( ७ )असितो धान्वो राजेत्याह । तस्यासुरा विशः, ते इमे... कुसीदिन उपसमेता भवन्ति तानुपदिशति मायावेदः... । ( ८ ) मत्स्यः सांमदो राजेत्याह । तस्योदकेचरा विशः ते मत्स्या मत्स्यहनश्च... तानुपदिशति इतिहासो वेदः... । (९) तार्क्ष्यो वैपश्यतो राजेत्याह तस्य वयांसि वयोविधिकाश्च विशः तानुपदिशति पुराणं वेदः । ( १० ) धर्म इन्द्रो राजेत्याह । तस्य देवा विशः... तानुपदिशति सामानि वेद इति । ( शतपथब्राह्मण १३।४।३।३-१४ )

अथ ऋग्यजुरथर्वाङ्गिरःसर्पविद्यादेवजनविद्यामायेतिहासपुराणसामस्वेतेषु दशसु वेदेषु चतुर्णां वेदानां षण्णामुपवेदानां चोल्लेखोऽस्ति । एतेषु चाथर्वणे पंचानामुपवेदानां संग्रहो दृश्यते । किन्त्वेत उपवेदाः प्रायो नैवोपलभ्यन्त इदानीम् । अतस्तद्विषये किंचिदपि वक्तुं न शक्नुमः । नानाविधप्राचीनविद्योद्धरणबद्धपरिकरैर्धीरधौरेयैस्तदन्वेषणेऽध्ययने च विधेयः प्रयत्न इत्याशास्महे ।

## अथर्वपाठभेदाः ।

ऋग्वेदे यजुर्वेदस्य तैत्तिरीयसंहितायां वाजसनेयिसंहितायां वा नैव पाठभेदाः समुपलभ्यन्ते, अथर्ववेदे तु बहवः पाठभेदा दृश्यन्ते । किंबहुना, अस्याः संहिताया नैकमपि काण्डं पाठभेदरहितं दृश्यत इदानीम् । सर्वे च पाठभेदा ग्रन्थ-

स्यास्यान्ते परिशिष्टे दत्तास्तत एव च सुधीभिरनुसन्धेयाः । अस्य हेतुरेक एव सम्भाव्यते– यदृचां यजुषां चाविच्छिन्नः पठनपाठनसम्प्रदायोऽद्यावधि वर्तते, तयोर्हि संहिता-पद-जटा-शिखा-माला-रेखा-ध्वज-दण्ड-घनादि-प्रकृति-विकृति-पाठकास्तत्र तत्र परिदृश्यन्त इदानीमप्यनूचानाः, न तु तथाथर्ववेदस्येति संप्रविष्टास्तत्र पाठभेदा इति नैष चित्रम् ।

ये त्वङ्गुलीनिर्देश्याः काश्यामयोध्यायां वा केचनाथर्ववेदिनः सन्तीदानीम्, ते प्रायशो महाराष्ट्रीया मूलत ऋग्वेदिन एवाथर्ववेदे कृतपरिश्रमाः । सर्वात्मनाऽननुकूलेऽप्यस्मिन्समये प्रणष्टप्रायाया अथर्ववेदाध्ययनपरम्परायाः पुनः प्रवर्तकास्ते सर्वेषामेव धन्यवादानर्हन्तीति मन्महे । आशास्महे च यदेतैः पुनरुद्धृतोऽथर्वसम्प्रदायो न चिरादेव प्रसरिष्यतीति । तथापि पूर्वमेव ये पाठभेदा वेदेऽस्मिन्समाविष्टाः सन्ति, ते कथं नामैकपद एवापसर्प्येरन्निति? एष हि परम्परालोपादुद्भूतो दोषः । समग्रस्याथर्ववेदस्य घनपारायणं कर्तुं शक्तो नैकोऽपि विद्यत इदानीं वैदिकः । अस्यास्तु शौनकीय-संहिताया अध्येतारो यत्र तत्रोपलभ्यन्तेऽपि, परन्तु पिप्पलादसंहिताध्यायी न कश्चन श्रवणपदवीमप्युपयाति । अतएव यत्प्रभूताः पाठभेदा उपलभ्यन्तेऽत्र, तन्निदानमध्येतॄवैरल्यमेवेति भाति ।

आस्तां तावल्लेखकाध्येतृप्रमादजन्यमध्येतृवर्गाल्पत्वजन्यं वा पाठभेदजातमत्र वेदे । अवकाशाभावाच्च तत्सर्वमधि-कृत्याऽस्माभिरत्र किंचिदालोच्यते । परन्त्वस्याथर्ववेदस्य चतुर्दशे काण्डे द्वितीये सूक्ते सप्तदशाष्टादशयोर्मन्त्रयोर्मध्ये दृश्यमान एकः पाठभेदो वैवाहिकमन्त्रगतत्वान्नोपेक्षणमर्हतीति तद्विषये किञ्चिदिवात्र विमृशामः ।

सर्वं चतुर्दशं काण्डं विवाहविषयकम्। तत्तु प्रायः ऋग्वेदादेवोद्धृतं संवर्धितं च भवितुमर्हति। ऋग्वेदीये हि दशमे मण्डले पञ्चाशीतितमं 'सत्येनोत्तभितेति' सूक्तं सूर्यासावित्रीदृष्टं विवाहविषयकं वर्तते, तत्सप्तचत्वारिंशन्मन्त्रात्मकं दृश्यते ऋग्वेदे । तदेव चैकोनचत्वारिंशदधिकशतमंत्रात्मकमस्मिन्नथर्ववेदे दृश्यते। उभयत्र सैव सूर्यासावित्री ऋषिका, विवाहश्च देवतारूपेण विषयः । अस्मिन् माङ्गलिके विवाहकर्मणि विनियुज्यमान आशीर्वचनपर एको मंत्रः ऋग्वेद एवं दृश्यते—

> अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।
> वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ ( ऋ० १०।८५।४४ )

एष एव मन्त्रो द्विधाभूतो दृश्यतेऽथर्ववेदे—

> अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः ।
> वीरसूर्देव (वृ)- कामा सं त्वयैधिषीमहि सुमनस्यमाना ॥१७॥
> अदेवृघ्न्यपतिघ्नीहैधि शिवा पशुभ्यः सुयमा सुवर्चाः।
> प्रजावतीर्वीरसूर्देव(वृ)-कामा स्योनेममग्निं गार्हपत्यं सपर्य ॥१८॥ (अथर्व० १४।२।१७-१८)

अत्र च लिखितपुस्तकेषु 'देवकामा' इति 'देवृकामा' इति च पाठद्वैविध्यं दृश्यते । वेदपाठका अपि देवकामेति पाठः क्वाचित्कः, देवृकामा इति तु बहुलमिति वदन्ति । एवं पाठद्वैविध्ये कः श्रेयानिति महत्यत्र विचिकित्सोदेति। अस्माभिस्त्वत्र 'देवकामा' इति पाठ एवाङ्गीकृतः, परं तत्र प्रत्यवतिष्ठन्ते केचन पुरोभागिनः । पैप्पलादसंहितायामपि 'देवकामा' इत्यस्य समुपलभ्यमानत्वात् 'देवकामा' इत्यस्यैव श्रेयस्त्वं संवर्धते । अतो निश्चयनीयोऽसौ पाठ इति तदुपस्तम्भकानि कानिचित् प्रमाणान्यत्र संगृह्यन्ते—

१. ऋग्वेदे दशमे मण्डलेऽस्मिन्विवाहसूक्ते 'वीरसूर्देवकामा' इत्येक एव पाठो भारतीयैः सर्वैरप्येतॄभिः प्रमाण-भूतैर्लेखकैश्च समस्वरमेवोररीक्रियते, न हि तत्रान्यपाठसंशयलेशोऽपि कस्यचित् स्फुरति। एवं सामवेदीय-मंत्रब्राह्मण-मानवगृह्यहिरण्यकेशिगृह्यपारस्करगृह्यादिष्वपि 'देवकामा' इत्येव पठ्यतेऽस्मिन्मन्त्रे ।

२. भारतमुद्रिते यूरोपमुद्रिते च ऋग्वेदे, ऋग्वेदपदसूच्यां, सभाष्ये ऋग्वेदे, अमेरिकामुद्रिते वेदसमन्वये ( Vedic Concordauce ) च सर्वत्र ऋग्वेदे 'देवकामा' इत्येकमेव पदमङ्गीकृतम् । केवलं सेन्टपीटर्सबर्गकोशे ऋग्वेदपाठो 'देवृकामा' इति लिखितः तमनुसृत्यैव च जर्मनमुद्रितायां शौनकीयाथर्वसंहिताभूमिकायां पाठभेदप्रकरणे 'देवृकामा'

इति पाठः सूचितः । तमनुसरद्भिरजमीर-वैदिक-यन्त्रालयस्थ-पण्डितैर्मुद्रिते ऋग्वेदे संस्कारविधौ च 'देवृकामा' इत्येव पाठः स्वीकृतः । किन्त्वसमीचीन एव पाठ इति कृत्वा नान्यैः कैश्चिदप्यङ्गीकृतः । इदानीं तु सर्वैरपि 'देवृकामा' इति पाठ ऋग्वेदे तिरस्क्रियते, ऐकमत्येन स्वीक्रियते च 'देवकामा' इत्येक एव पाठ ऋग्वेदे ।

३. मोक्षमुलरमुद्रिते ऋग्वेदपाठे, कुम्भकोणमुद्रिते निर्णयसागरमुद्रिते च पदपाठे 'देवकामा' इत्येक एव पाठः स्वीकृतः । भट्टमोक्षमुलरेण ऋग्वेदपदपाठविषये महती गवेषणा कृता, परन्तु पदस्यास्य विषये न कोऽपि पाठभेदः प्रदर्शितः । स्वीकृतश्च तेन ऋग्वेदे 'देवकामा' इत्येक एव पाठः ।

४. म० मोनियर विलियम्निर्मिते संस्कृताङ्ग्लकोशे ऋग्वेदे देवकामेत्येक एव पाठो दर्शितः ।

५. मुम्बय्यां निर्णयसागर-यन्त्रालयेऽनेकवारं मुद्रितो दृश्यते ऋग्वेदः । तत्र 'देवकामा' इत्येव पाठः स्वीकृतः । एवमेव गणपतकृष्णाजी-मुद्रितेऽपि ।

६. पुण्यपत्तनमुद्रिते सायणभाष्यसहिते ऋग्वेदे 'देवकामा' इत्येव पाठोऽङ्गीकृतः । पं० मोक्षमुलरेण द्विवारं ओक्सफोर्डनगरे मुद्रित ऋग्वेदः, तत्राप्ययमेव पाठत्वेन स्वीकृतः ।

७. म० विल्सन-महोदयेनानुवादिते ऋग्वेदे 'देवकामा' इति पाठमुररीकृत्य ( Be devoted to Gods ) देवान्कामयमाना भव इत्येवानूदितम् । म० ग्रिफिथ महोदयोऽपि स्वीये ऋग्वेदानुवादे 'देवकामा' इति पाठं स्वीकृत्य ( Loving the Gods) देवान्कामयमाना इत्यनूक्तवान् ।

८. सामवेदमन्त्रब्राह्मणे 'देवकामा' इति पाठो दृश्यते ।

९ पारस्करगृह्यसूत्रे ( १।४।१५ इत्यत्र ) 'देवकामा' इत्येक एव पाठोऽङ्गीकृतः । ( पं० लधारामशर्मसम्पादितं मुम्बय्यां १९४५ खिस्ताब्दे मुद्रितं द्वितीयं पृष्ठं द्रष्टव्यम् । )

१०. हिरण्यकेशीये गृह्यसूत्रे (१।२।४ इत्यत्र) 'देवकामा' इत्येव पाठः स्वीकृतः ।

११. आपस्तम्बीये मन्त्रपाठे (१।१।४ इत्यत्र) 'देवकामा' इत्येव पाठो दृश्यते ।

१२. मानवगृह्यसूत्रे (१।१०।६ इत्यत्र) 'देवकामा' इत्येव पाठ उपलभ्यते (भारतवर्षमुद्रितं वा डा० फ्रेड्रीक नौरद्वारा सम्पादितं सेन्टपिटर्सबर्गमुद्रितं सूत्रं द्रष्टव्यम् । )

१३. एवं सर्वत्र धर्मसूत्रे गृह्ये, ब्राह्मणग्रन्थे वा वैवाहिके प्रकरणेऽन्यत्र वा प्रयुक्तः पाठो 'वीरसूर्देवकामा' इत्येक एव दृश्यते । नैकत्रापि धर्मसूत्रे, गृह्ये ब्राह्मणग्रन्थे वा 'देवृकामा' इति केनाप्यङ्गीकृतः पाठः ।

एवं यदि वैदिकसूत्रादिग्रन्थप्रामाण्यं विचार्येत, तर्हि सर्वैरेतैर्ग्रन्थकृद्भिर्वैवाहिके कर्मणि 'देवकामा' इत्येक एव पाठः समादृत इति स्पष्टम् ।

अथ समिमं प्रबलतमं ऋग्वेदपाठोपस्तम्भमवलम्ब्याथर्वणपाठमधिकृत्य किञ्चिल्लिख्यते—

१. अथर्ववेदस्य लिखितपुस्तकानि द्विविधानि समुपलभ्यन्ते, तत्र केषुचित् ( १४।२।१७-१८ ) 'देवकामा' इति पाठो दृश्यते, केषुचित्तु 'देवृकामा' इत्यपि । अथर्ववेदाध्येतारोऽपि 'देवकामा' इति प्राचिकः पाठः 'देवृकामा' इति तु बहुमतः इति वदन्ति । न चैष पाठभेदो देशभेदप्रयुक्तो भवितुमर्हति, अविशेषेणौत्तरेषु दाक्षिणात्येषु च पाठद्वयस्याप्यस्य समुपलभ्यमानत्वात् ।

२. स्वर्गीयैः शङ्करपाण्डुरङ्गपण्डितैः संशोधिते मुम्बय्यां मुद्रिते सायणभाष्यसहितेऽथर्ववेदे 'देवृकामा' इत्येक एव पाठो दृश्यते । नैतैः कोऽप्यन्यः पाठभेदः प्रदर्शितोऽत्र । अतोऽनुमीयते यदेतेषां निकटे येऽथर्ववेदग्रंथाः संगृहीतास्तेषु 'देवृकामा' इत्येव पाठ आसीदिति ।

३. श्री० व्हिटने महोदयेनानुवादितेऽथर्ववेदे अस्य मन्त्रस्य टिप्पण्यां (In some manuscripts देवकामा) कतिपयेषु ग्रंथेष्वत्र 'देवकामा इति पाठो दृश्यते' इत्युक्तम्। अथर्वकाण्डे १४।२।१७ इति मंत्रस्य टिप्पण्यां स एव (पृ० ७५६) पुन. [*Our manuscripts are divided in C between* देवकामा and देवृकामा. The majority (not BP, BS, PM, C. O. D.) having with RV and Ppp; the latter which is therefore more probably the true reading.]

"अस्माकं सन्निधौ यान्यथर्ववेदसंहिता-पुस्तकानि सन्ति तानि द्विविधपाठयुक्तानि सन्ति, कतिपयेषु 'देवृकामा' इति अन्येषु च 'देवकामा' इति पाठो दृश्यते" इति लिखित्वा स्वीयेऽनुवादे देवृकामा इति पाठं स्वीकृत्य (Loving brothers-in-law?) देवरं कामयमाना (?) इति संदेहचिह्नेन सहानूदितमङ्कितवान्। स्वीये देवनागराक्षरैर्मुद्रितेऽथर्ववेदे तु स्वयमेव 'देवकामा' इति पाठं च स्वीकृतवान्! अतस्तस्यैतत्पाठविषये संदेह एवेति स्पष्टं प्रतीयते।

अथर्ववेदे तु म० ग्रिफिथेन द्वयोरपि मंत्रयोः स्थाने 'Love thy husband's father श्वपतेः पितरं कामयेत्यनुवादः कृतः। अत्रानुमीयते यत् Brother (भ्रातृ-) स्थाने Father (पिता) इति पदं मुद्रणाशुद्धिजन्यमिति। अशुद्धत्वाचैतदप्रामाणिकमेवेति नास्ति सन्देहलेशोऽपि।

४. लिखित-ग्रन्थेषु द्विविधं पाठं पश्यतापि आर. रोथ-डब्ल्यू. डी. व्हिटनी महोदयाभ्यां जर्मन्यां बर्लिननगरे वि० १९२४ मुद्रितेऽथर्ववेदे (मं० १४।२।१७-१८ इत्यत्र) 'देवकामा' इत्येव पाठो मुद्रितः।

५. भारते शिलामुद्रितेऽथर्ववेदे 'देवकामा' इत्येव पाठो मुद्रितः।

६. पिप्पलाद-संहितायां त्वथर्ववेदस्य 'देवकामा' इत्येव पाठोऽस्ति निश्चितः। प्रमाणं चैतत्प्रबलमस्य पाठस्योपादेयत्व इति मन्यामहे।

६. वयं तु ऋग्वेदीय-मन्त्र इव सर्वात्मना तदभिन्नेऽत्र मन्त्रे 'देवकामा' इत्येव पाठो युक्त इति प्रतीमः।

अर्थनिर्णये तदनुसारिणि पाठनिश्चये च सूक्ष्ममतिभिरालङ्कारिकैरौचित्यं स्मरद्भिश्च मंत्रार्थं विमृशद्भिरस्माभिश्च वैवाहिकमङ्गले वध्वाअत्प्रथमपतिगृहप्रवेशनविधौ, समिलितैः सम्बन्धिभिरिष्टैश्च शिष्टैः श्रोतुरुपेर्दम्पत्योर्मङ्गलं कामयद्भिर्दीयमान आशीर्वचने 'देवृकामा भव' इत्याशंसनं युक्तमिति नैव मन्तुं शक्यते। देवरं कामयेति सर्वात्मनानुचितार्थकात् देवृकामा इति पदात्, देवान् उपास्वेति भावदर्शकं 'देवकामा' इति पदमेव प्रसङ्गानुगुणमिति न प्रतिभाति।

किञ्च, अग्रोच्यमानं देवकामाया गार्हपत्याग्निसपर्याकरणमनतिव्यवहिते मंत्रान्तरे 'सुमङ्गल्युपसीदेममग्निं सं पत्नी प्रति भूषेह देवान्।' (अथर्व० १४।२।२५) इति पुनः स्पष्टतरं श्रूयमाणं सूक्ष्मया धिया विभावयन्तः, अस्पष्टानां मन्त्राणां स्पष्टैर्मन्त्रान्तरैरर्थावधारणं मीमांसासम्मतमित्यभ्युपगच्छन्तः, देवरं कामयितुं गार्हपत्यसपर्योपदेशस्य च सुतरामसङ्गतत्वमिति जानन्तश्च न केऽपि विप्रतिपत्स्यन्तेऽत्र सहृदया इति विश्वसिमः॥

अस्मिन्नेव च मंत्रे 'अदेवृघ्नी' इति पदं पश्यतां साहित्यसारविदां हृदयमुद्देश्यप्रतिनिर्देश्ययोरभावेऽपि देवृपदस्य पुन प्रयोगं कथमिव युक्तं मन्येत?

एवं 'देवकामा' इति पाठस्य प्रामाणिकत्वसाधनेन 'देवृकामा' इति पाठस्यासारता स्वत एव सिद्ध्यति। न च दुर्जनपरितोषन्यायेनात्र स्वीकृतेऽपि 'देवृकामा' इति पाठे नियोगसाधकानामभिमतार्थसिद्धिर्भवितुं शक्या। धर्मशास्त्रेषु 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।' (याज० १।६८) इत्यादिना अपुत्राया विधवाया एव देवरेण नियोगस्यानुज्ञानात्। श्रूयते च मंत्रेऽपि 'को वां शयुत्रा विधवेव देवरं (ऋ० सं० १०।४०।२) इति।

किंतु विवादास्पदेऽस्मिन् मन्त्रे सूक्ते च सर्वत्रवैधव्यं पतिलोकप्राप्तिश्चाशास्यते। वधूश्चेयं न केवलं प्रजावती, अपि

तु धीरसूरिति। कथं नामात्र नियोगविधानस्य गन्धोऽपि सम्भवेत् ? उक्तं च स्पष्टमेव वेदपारावारपारदृश्वना भगवता मनुना 'नोद्वाहिकेषु मंत्रेषु नियोगः कीर्त्यते क्वचित् ।' ( ९।६५ ) इति ।

तदस्य देवृकामा-पदस्य पुत्रकामा-पदस्येव देवराणां सत्तामिच्छन्तीत्येवार्थः प्रत्येतव्यः। 'प्रतीक्षन्ते श्वशुरो देवरश्च' ( अथर्व० १४।१।३९ ) 'सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु । ( अथर्व० १४।१।४४ ) इत्यादि मन्त्रलिङ्गान्यप्यत्र निर्दिष्टार्थोपोद्बलकानीति सर्वथा सूर्यैवास्मायास्यतेऽत्र नियोगविधिसाधकैः संगतसृग्गिकानुधावनेनेत्यास्तां तावत् ।

एवमुपलभ्यमानेऽस्मिन् पाठद्वये यावद्बुद्धिबलं विमृश्य 'देवकामा' इति पाठ एवाश्रितोऽस्माभिः। इत:परं तद्युक्तत्वा-युक्तत्वानिर्धारणं तु गुणगृह्येषु सहृदयेष्वेवायतते ।

सर्वे एवान्यत्रत्याः पाठभेदा एवमेव सूक्ष्मेक्षिकया निरीक्ष्य परीक्ष्य चावधारणमर्हन्तीति जानीमहे । जिघटिषामहे च तद्विषये यावन्मनीषमवसरान्तरे महोदयानामनुग्रहेणेति सविनयं निवेद्य प्रकृतमनुसरामः ।

## संशोधकानामभिनन्दनम् ।

*अथाथर्ववेदस्यास्य संशोधनकर्मणि महाभागैरथर्वविद्भिः साहाय्यं कृतं तेऽमी—*

१ श्री वेदमूर्तयो रामचन्द्रभट्टाः रटाटे आहिताग्नय ऋग्वेदाथर्ववेदिनो दरभंगापाठशालाचार्याः । काशीस्थाः ।
२ ,, ,, सखारामभट्टवैद्याः अथर्ववेदिनो गोयन्काविद्यालयाथर्ववेदाध्यापकाः । ,,
३ ,, ,, धुण्ढीराजशास्त्रिणः रटाटे अथर्ववेदिनः । ,,
४ ,, ,, नारायणभट्टा घुले अथर्ववेदिनः । ,,
५ ,, ,, रामचन्द्रभट्ट-गोपीनाथभट्ट-आठवले श्रौतभूषणा वैदिकरत्नाः ऋग्वेदाथर्ववेदिनः । ,,
६ ,, ,, कृष्ण-विद्याधरभट्टाः-दीक्षिताः लेले अथर्ववेदिनः अयोध्यावासिनः
७ ,, पं० अमृतरामाचार्याः पण्ड्या याज्ञिकभूषणा उपाध्यायाः धर्मशास्त्राचार्याः । मथुरावासिनः

एतैर्विद्वद्वरैरस्याथर्वमुद्रणस्य पत्राणि संशोध्य समये समयेऽस्माकं संशोधनकाठिन्यमपसारितम् । एतेषां धर्मधुरीणानां कृपयैतद्वेदस्यास्य प्रकाशनं साफल्येन समाप्तिमगात्; अतस्ते सर्वे सविशेषं संमाननीया अभिनन्दनीयाश्च । यदि हि तेषाम-कृत्रिमं साहाय्यकं नाभविष्यत्, तर्हि दुष्करमेवाभविष्यदथर्वण आविष्करणमिदमिति ।

## अथर्ववेदस्य बृहत्सर्वानुक्रमणिका ।

*अथर्ववेदीया बृहत्सर्वानुक्रमणिका श्रीमद्भिः पण्डितैः लाहोरनिवासिभी रामगोपालशास्त्रिभिः संशोध्य प्रकाशिता* इदानीमुपलभ्यते । द्वितीया लघुसर्वानुक्रमणिकाऽपि वर्तते । एतामेवाथर्ववेदबृहत्सर्वानुक्रमणिकामाश्रित्यात्र ऋषिदैवत-च्छन्दांसि लिखितानि ।

एषा सर्वानुक्रमणिका चतुर्वेदभाष्यकारैः सायणाचार्यैर्नोपलब्धा चोपेक्षिता वेति न निश्चीयते। तैस्तु स्वीये भाष्येऽथर्ववेदस्य ऋषिदेवताच्छन्दांसि नैव निर्दिष्टानि, इत्यतोऽनुमीयते, सैषा सर्वानुक्रमणी तत्समये नासीदिति; संमानयोग्या वा नाभवदिति वा अत एव तैरुपेक्षिता नादृता वा ।

यदि पुनरियं सर्वानुक्रमणिका भाष्यविरचनात्पूर्वं निष्पन्ना भवेत्, तर्हि नियतं भाष्यमनुसरेत् । न च तथा दृश्यते।

यतः प्रथमकाण्डे द्वितीयं सूक्तमधिकृत्य भाष्यकारा वदन्ति 'अस्य सूक्तस्यैन्द्रदेवताकत्वात् ।' ( १।२।२ ) इति। अनुक्रमण्यां तु 'द्वितीयं चान्द्रमसं पार्जन्यम्' ( १।४ ) इत्यन्यथैवोपलभ्यते । अतः सर्वानुक्रमणीकारेण भाष्यं नावलोकितमिति सिद्ध्यति । प्रादुर्भूतस्यापि भाष्यस्यानवलोकनमनादरणं वा नोपपद्यते । अतः संभाव्यते सैषा सर्वानुक्रमणी भाष्यात् पूर्वतनैवेति । भाष्येऽनुल्लेखस्त्वस्या अनादरादेव । तथा हि—

ऋग्वेदस्य शुक्लयजुर्वेदस्य च कात्यायन-निर्मिता सर्वानुक्रमणी यथा व्यवस्थिता दृश्यते न तथैषा। अत्र नैव समीचीना परिभाषा, नापि आर्षी भाषा, न पदलाघवं, न च काचिद्विशिष्टा परिपाटी दृश्यते । अनावश्यकपदानां समाम्रेडनमस्या अनार्षत्वस्य द्योतकत्वे पर्याप्तं प्रमाणमस्ति। यथा गायत्रीछन्दसो नित्यत्रिपादत्वेऽपि अत्रानेकत्र 'त्रिपदा गायत्री' इत्येवोक्तम्।

*अनावश्यकपदानामाम्रेडनेन, स्वयमुद्दिष्टानामपि परिभाषाणां स्वैरमुल्लङ्घनेन, तत्र तत्र मन्त्रलिङ्गविसंवादि-देवता-कल्पनेन, अन्यैश्च बहुविधैर्दोषैरावलितेयं नार्षीत्यवलोकनसमकालमेव प्रतीयते । अस्यां मुद्रणदोषा अपि प्रभूततमाः, यथा ( २०।२२।१ इत्यत्र ) 'षट्त्रिंशोक' इति वक्तव्ये 'षट्त्रिंशत्' इति मुद्रितम्, ( २०।२१।१ इत्यत्र ) 'सव्य' इति वक्तव्ये 'सद्य' इत्येव मुद्रितम् । एवमेवानेकेषु स्थलेषु प्रमादबाहुल्यं दृश्यते ।*

अनार्षेऽप्यस्मिन् ग्रन्थेऽनेकदोषबहुलेऽपि शुद्धतरस्यान्यस्य ग्रन्थस्याभावादेतमाधिलैवात्र ऋषिदैवतच्छन्दांसि समुल्लिखितानि । तेषु बहूनि पुनर्विचारार्हाणि सन्ति । तत्संशोधनं तु श्रीमद्भिः पण्डितवर्यैर्वेदाभ्यासतत्परैरनन्तयज्ञेश्वरधूपकर इत्येतैः क्रियत इदानीम् । यदा तत्संपत्स्यते, तदा तदित एव प्रकाशीभविष्यति ।

## आदर्शग्रन्थाः ।

अस्याथर्ववेदस्य मुद्रणकर्मणि सहायीभूता आदर्शग्रन्थास्त्वेते–(१) स्व० शंकरपांडुरंगपण्डितैः संशोध्य प्रकाशितः सायणभाष्यसहितो निर्णयसागरमुद्रितोऽथर्ववेदः, (२) जर्मन्यां बर्लिननगरे म०रोथ-व्हिट्नी महोदयाभ्यां संपादितो मुद्रितश्चाथर्ववेदः, (३) शिला-यंत्र-मुद्रितोऽथर्ववेदः, (४) काशी-संस्कृत-महाविद्यालय-( कालेज ) ग्रंथालयस्थो लिखितो डा० मंगलदेवशास्त्रिणां कृपया प्राप्तोऽथर्ववेदः, (५) पुण्यपत्तनस्य भांडारकर-प्राच्यविद्यासंशोधकसंस्थानस्य-(ओरिएन्टल रिसर्च- इन्स्टीट्यूट-स्य ) लिखितग्रन्थाः, संहिता-पद-पाठ-ग्रन्थाश्चाथर्ववेदस्य, (६) अष्टे-नगरात् श्री शम्भुराव गोविंदराव लिमये इत्येतेषां संग्रहाल्लब्धोऽथर्ववेदः, (७) काशी, अयोध्या, मथुरा इत्यादिस्थानेभ्यो लब्धानि वैदिक-पठनपाठनपद्धत्या संशोधितानि कतिपयानि लिखितपुस्तकानि अथर्ववेदस्य । सर्वैरप्येतैर्ग्रन्थैः पाठसंशोधनकर्मणि महत्साहाय्यं सम्पादितम्।

एवमीश्वरकृपया संशोध्य मुद्राप्य च प्रकाशिता शौनकीयैषाथर्ववेदसंहिता वैदिकधर्मश्रद्धावतामादरस्थानं प्राप्स्यतीत्याशास्ते।'

औन्ध नगरे
शके १८६० पौषस्य शुद्धनवम्याम् । } सातवळेकरकुलजो दामोदरभट्टसूनुः श्रीपादशर्मा ।

# विषयसूची ।


## (१) अध्यात्मप्रकरणम् ।

अध्यात्मम् ११।८, १३।२,३,४,५,६,७,८,९
अध्यात्म-प्रकरणम् १३।१; १५।१–१८
अनड्वान् ४।११; अमृतत्वम् ७।१०६
अमृतप्रदाता ६।१ अमृतासुः ५।१
आत्मगोपनम् ६।३,४; आत्मनोऽहिंसनम् ७।१०२
आत्मरक्षा ५।१०; आत्मविद्या ४।२
आत्मा ५।९; ७।१,२,३,५,६७,१११; ९।९,१०; १९।५१
उच्छिष्टब्रह्म ११।७; एको विभुः ७।२१
उत्तरतो रत्नम् १९।५५, उत्तरदृष्टिः पुरुषः १९।६
ज्येष्ठं ब्रह्म १०।८; ज्योतिः ७।२२; दैव्यं वचः ७।१०५
परमात्मा १९।७२; परमं धाम २।१; प्राणः ११।४
ब्रह्म ७।६६; ब्रह्मविद्या ४।१, ५।६; ब्रह्मप्रकाशनम् १०।२
ब्रह्मा १९।२२, ४३; भुवनस्पतिः २।२; भुवनेषु ज्येष्ठः ५।२
मधुविद्या १।३४, ९।१; महद्ब्रह्म १।३२; मार्गस्वस्त्य-
यनम् ७।५५; मृत्युंजयः ६।१३; मृत्युसंतरणम् ४।३२
विराड् ८।९,१०; विश्वकर्मा २।३५; विश्वजित् ६।१०७
विश्वप्राणः ७।४; विश्वस्रष्टा ६।६१; व्यापको देवः ७।८७
शान्तिः १९।९,१०,११; सत्यानृतसमीक्षकः ४।१६
सर्वाधारवर्णनम् १०।७; सौमनस्यम् ६।५५, १२३
संतरणम् ७।१०७; संप्रोक्षणम् ६।१०
स्वर्ज्योतिःप्राप्तिः ४।१४; स्वस्ति ७।२८

## ब्रह्मचर्यप्रकरणम् ।

अध्यापकविघ्नशमनम् ७।५४; ब्रह्मकर्म ५।२४
ब्रह्मचर्यम् ११।५; ब्रह्मयज्ञः १९।४२
मेखलाबन्धनम् ६,३३; मेधा १९।४०; मेधाजननम् १।१
मेधावर्धनम् ६।१०८; वाक् ७।४३; वेदमाता १९।७१

## गृहस्थप्रकरणम् ।

अतिथिसत्कारः ९।६; आनृण्यम् ६।११७,११८
कामः ९।२; १९।५२; कामस्य इषुः ३।२५
कामात्मा ६।८,९; कामिनीमनोऽभिमुखीकरणम् २।३०
कुलपा कन्या १।१४; केवलः पतिः ७।३८
गर्भाधानम् ५।२५; ६।८१; जायाकामना ६।८२
तृतीयो नाकः ६।१२२; दम्पत्यो रयिःप्राप्तये प्रार्थना ६।७८
पतिलाभः ६।६०; पतिवेदनम् २।३६; पुष्टिकर्म १।१५
पुंसवनम् ६।११; ब्रह्मजाया ५।१७; रम्यं गृहम् ७।६०
वपनम् ६।६८; विवाहप्रकरणम् १४।१,२; वीरप्रसूतिः ३।२३
वेदोक्तं कर्म १९।६८; शाला ९।३; शाला (दूर्वा) ६।१०६
शालानिर्माणम् ३।१२; सुकृतलोकः ६।१२०,१२१
संपत्कर्म ५।११; स्मरः ६।१३०,१३१,१३२

## वानप्रस्थसंन्यासप्रकरणे ।

व्रात्य-(वर्णनम्) १५।१–१८

## आयुर्वेदप्रकरणम् ।

### आयुर्वर्धनम् ।

अङ्गानि १९।६०; आयुर्वर्धनम् १९।६३; आयुष्यम् ६।७१
दीर्घायुः ५।२८, ७।३२, ३३, ५३; दीर्घायुःप्राप्तिः १।३०,
३५; २।४,९,१३,२८; ३।११; ६।४१,४७,११०; ८।१,२;
दीर्घायुत्वम् १९।६४,६७; दीर्घायुष्यम् २।२९; ५।३०;
पूर्णायुः १९।६१, ७०

### विविधौषधि-भैषज्यादि ।

अञ्जनम् ७।३०,३६; अपामार्गः ४।१७, १८, १९;
अपां भैषजम् १।४,५,६; ६।२३,२४; अक्षिरोगभैषजम्
६।१६; आञ्जनम् ४।९; १९।४५; आपः १।३३; ३।१३;
७।३९; १९।२,६९; आपः (दिव्याः) ७।८९; आस्रावस्य
भेषजम् २।३; ओषधयः ८।७; ओषधिः ६।५९;
कुष्ठौषधिः ६।९५; केशदृंहणम् ६।१३६; केशवर्धनम्
६।१३७; केशवर्धिनी ओषधिः ६।२१; गर्भसंस्रावः
२०।९६ (११-१६); पिप्पली भैषज्यम् ६।१०९;
पृश्निपर्णी २।२५; भैषज्यम् ६।२२,५२,८३; १९।४४
रोहिणी वनस्पतिः ४।१२; लाक्षा ५।५
वनस्पतिः ३।१८; वाजीकरणम् ४।४
विषभैषज्यम् ७।५६; सौभाग्यवर्धनम् ६।१३९

### रोगादिनिवारणम् ।

इषुनिष्कासनम् ४।९०; उन्मत्ततामोचनम् ६।१११
कासशमनम् ६।१०५; क्षुधतक्मनाशनम् ५।४
कुष्ठनाशनम् १९।३९; क्लीबत्वम् ६।१३८

गर्भदृंहणम् ६।१७; गर्भदोषनिवारणम् ८।६
गण्डमालाचिकित्सा ७।७४, ७६; चिकित्सा ६।९६
जलचिकित्सा ६।५७, ज्वरनाशनम् १।२५; ७।११६
तक्मनाशनम् ५।२२; दुःष्वप्न्यघ्नम् २०।९६ (२४)
नारीसुखप्रसूतिः १।११; निर्ऋत्यपसरणम् ६।१२४
बलासनाशनम् ६।१४; मूत्रमोचनम् १।३
यक्ष्मनाशनम् ३।११; ३।७, ३१; ६।२०, ८५,९१, १२७; १२।२,१९।३८; २०।९६ (६-१०,१७-२३)
यक्ष्मनिवारणम् ९।८; यक्ष्मविबर्हणम् २।३३
रुधिरस्रावनिवृत्तये धमनीबन्धनम् १।१७
रोगनाशनम् ६।४४; रोगनिवारणम् ४।१३
रोगोपशमनम् १।२; ५।१५; सर्परोगनाशनम् ५।१६
श्वेतकुष्ठनाशनम् १।२३, २४; सुमङ्गलौ दन्तौ ६।१४०
स्वापनम् ४।५; हृद्रोगकामिलाशमनम् १।२२
क्षेत्रियरोगनिवारणम् २।८

## क्रिमिनाशनम् ।

क्रिमिघ्नम् ५।२३; क्रिमिजम्भनम् २।३१
क्रिमिनाशनम् २।३२, ४।३७

## विषनाशनम् ।

विषघ्नम् ४।६; विषदूषणम् ६।१००; विषनाशनम् ४।७
सर्पविषदूरीकरणम् १०।४; सर्पविषनाशनम् ५।१३; ७।८८
सर्पविषनिवारणम् ६।१२; सर्पेभ्यो रक्षणम् ६।५६

## अरिष्टनाशनम् ।

अरिष्टक्षयणम् ६।२७,२८,२९,८०; अलक्ष्मीनाशनम् १।१८; असुरक्षयणम् ६।७, १९।६६; ईर्ष्याविनाशनम् ६।१८, ७।४५; कृत्यादूषणम् १०।१; कृत्यापरिहरणम् ५।१४,३१; दस्युनाशनम् २।१४; पिशाचक्षयणम् ४।२० मन्युशमनम् ६।४३; यातुधाननाशनम् १।७, ८
यातुधानक्षयणम् ६।३२; रक्षोघ्नम् १।२८, ५।२९

# (२) अधिभूतप्रकरणम् ।

## राज्यशासनम् । विजयसाधनम् ।

अजरं क्षत्रम् ३।१९; ६।९८; अभयप्राप्तिः २।१५; अभयम् ६।४०; १९।१४,१५,१६; अभययाचना ६।५०; अभिसोमनस्यम् ६।१०२; अभ्युदयाय प्रार्थना १७।१; अलक्ष्मीनाशनम् २०।१३७; ऊर्जःप्राप्ति ६।७९; शिशु आत्मरक्षा ३।२६ द्रविणार्थं प्रार्थना ७।१७, परस्परचित्तैकीकरणम् ६।९४
परिपाणम् ७।५३; प्रतिष्ठापनम् ६।७७
बलप्राप्तिः २।१७; ६।१३५, १९।३७
यशःप्राप्तिः ६।५८; रयिसंवर्धनम् ३।२०
रायस्पोषप्राप्तिः ३।१०; वर्चोबलप्राप्तिः ६।६३
वर्चःप्राप्तिः ३।२२,६।५,६९; वर्चस्यम् ६।३८,३९
वाजीकरणम् ६।७२,१०१; विजयप्राप्तिः १०।५
विजयः ७।५०; विजयाय प्रार्थना १।९; ५।३
वृषकामना ६।८६; श्रेयःप्राप्तिः २।११
सपत्नक्षयणम् ६।७५; ७।३५; सर्वप्रियत्वम् १९-६२
सर्वतो रक्षणम् ६।५३; सांमनस्यम् ३-३०; ६-६४,७३ ७४,९४; ७।५२,९४; सुरक्षा २-१६; १९-१७,१८,२०,२७
स्वस्तये प्रार्थना ३-१६; स्वस्तिवाचनम् ६।४८
स्वस्त्ययनम् १-२७; ६-९३

## राजराष्ट्रशासनम् ।

अभिभूर्वीरः ६।९७; अरिष्टनेमिः ७-८५; अविः ३-२९
आकूतिः १९-४; एकवीरः १९-१३; प्रजाः ७-१९
प्रजाभी राज्ञः संवरणम् ३।४; भूमिसूक्तम् १२-१
राजा ६-८८; ६-१२८; राज्याभिषेकः ४-८
राष्ट्रधारणम् ३-८; राष्ट्रभृतः ७-१०९
राष्ट्रम् १९-२४; राष्ट्रं बलमोजश्च १९-४१
राष्ट्रसभा ७-१२; राष्ट्रस्य राजा राजकृतश्च ३-५
राष्ट्राभिवर्धनम् १-२९; राष्ट्रीदेवी ४ ३०
राज्ञः संवरणम् ६-८७ वाजिनीवान्नृषभः ४-३८
स्वराज्ये राज्ञः पुनःस्थापनम् ३-३। क्षत्रियः ६-१०३

## संग्रामादिकम् ।

दुंदुभिः ६-१२६; वर्मधारणम् ७-११८; वीरस्य रथः ६-१२५
शत्रुबलनाशनम् ७-९०; शत्रुसेनात्रासनम् ५-२०,२१
शत्रुसेनासंमोहनम् ३-१,२; सेनानिरीक्षणम् ४-३१
सेनासंयोजनम् ४-३२; संग्रामजयः ६-९९

## शत्रुनाशनम् ।

अमित्रदम्भनम् ६-५४; अमित्रक्षयणम् ४।२२
शत्रुदमनम् ७-७०; ८-४; शत्रुनाशनम् २-१२,१८,१९, २०,२१,२२,२३,२४; ३-६; ४-३,४०; ५-८; ६-६,३४, ६५,६६,६७,१०३,१०४,१३४; ७-८,१३,३१,३४,६२, ७७,९३,९५,९६,१०८,११०,११३,११४; ८-३; ११-१० शत्रुनिवारणम् १-१९,२०,२१; ३-२०; ६-१५; ७-११७; ११-९; शत्रुपराजयः ७-२७; ८-८ शत्रुवाधनम् १-२१

## मणिधारणम्।

अस्तृतमणिः १९।४६; औदुम्बरमणिः १९-३१
जङ्गिडमणिः १९-३४,३५; दर्भमणिः १९-२८, २९, ३०
प्रतिसरो मणिः ८-५; मणिबंधनम् १०-६
शतवारो मणिः १९-३६; शंखमणिः ४-१०
सपत्नक्षयणो वरणमणिः १०-३

## पापादिनाशनम्।

अरातिनाशनम् ५-७; अवनम् १९-६५
उन्मोचनम् ६-११४; एनोनाशनम् ६-५१
दुरितनाशनम् ७-६३, ६५; दुःस्वनाशनम् ३-९
दुःखमोचनम् १६-१; दुःस्वप्ननाशनम्६-४५,४६;७-२३,
१००,१०१; १९-५६,५७; निर्ऋतिमोचनम् ६-८४
पापनाशनम् ४-३३; ७-११२; पापमोचनम् ४-२३,२४,
२५, २६, २७, २८, २९; ६-११५;७-४२,६४;११-६
पापलक्षणनाशनम् ७-११५; पापशमनम् ६-३०, ११३
पाप्मनाशनम् ६-२६; पाशमोचनम् १-१०, ११;२-१०;
६-११२, ११९; ७-८३; बन्धमोचनम् ७-७८
मन्याविनाशम् ६।२५; शापनाशनम् ६-३७
शापमोचनम् २-७, ७-५९

## अन्नादिकम्।

अन्नम्६-७१,७-५८; अन्नसमृद्धिः ६-१४२;ओदनः ११ ३;
पञ्चौदनो अजः ९-५; ब्रह्मौदनम् ४-३४, ११-१
मधुमदन्नम्६-११६; वालः७।३७; वृष्टिः ४।१५; ७-१८;
स्वर्गौदनः १२-३

## सुखसंपत्प्राप्तिः।

प्रीतिसंजननम् ६-८९; भगप्राप्तिः ६-१२९
शर्म १९-१९; शर्मप्राप्तिः १-२६
शान्तिः ३-२१; समृद्धिप्राप्तिः ३-२४
संनतिः ४-३९; सुखम् ७ ६९
हिरण्यधारणम् १९-२६

## (२) अधिदैवतप्रकरणम्।

अग्नाविष्णू७।२९; अग्निः ५।२७,६।४९;७।७१,८२;२०।१
(३);२०।२(२);२०।१३(३-४);६७(३),१०१-१०३
अग्निः सत्यौजाः ४।३६; अग्निः सपत्नहा २।६
,, क्षत्रभृत्७।८४; अथर्वाणः १९।२३; अदितिः ७।६
आदित्याः ७।७; अनुमतिः ७।२०; अश्विनौ २०।१२५
(४-५),१३९-१४३; इडा ७।२७; इन्द्रः ६।३३,७।७२;
२०।१(१),२(३);३-१२,१४-१५,१७-३९,४१-४६,
४७(१-१२),५०-५७;५८(१-२),५९-६६,६७(१),
६८-८७,८९,९२-९५,९६(१-५),९७-१००,१०४-
१०६,१०७(१-१३),१०८-१२२,१२४;१२५(१-३,
६-७), १२६,१३७(२,७-१४);१३८; इन्द्रःजेता ६।१२,
इंद्रः त्राता ७।८६; इंद्रः सुत्रामा ७।९१,९२
इन्द्रस्य वीर्याणि २।५; इन्द्राबृहस्पती २०।१३(१)
इन्द्राविष्णू ७।४४, इन्द्रोमरुतश्च २०।४०(१)
उषा १९।१२; कुहू ७।४७; छन्दांसि १९।२१
जातवेदाः१९।३; देवपत्न्यः ७।४९;ब्रविगोदाः२०।२(४)
नक्षत्राणि १९।७,८; पावमानम् ६।१९,६२
पूषा स्वस्तिदाः ७।९; बृहस्पतिः २०।१६,८८,९०,९१
मरुतः २०।१(२),२(१);१३(२),४०(२-३);६७(२)
राका७।४८; रुद्रः११।२; विद्युत् ।।।१; विष्णुः७।२५,२६
वैश्वानरः ६।३५,३६; सरस्वती ७।१०,११,५७,६८
सरस्वान् ७।४०; सविता ७।१४,१५,१६,२४
सिनीवाली ७।४६; सुपर्णः ७।४१; सूर्यः २०।४७
(१३-२१),४८,५८(३-४),१०७(१४-१५),१२३
गौः २०।४८; सूर्याचन्द्रमसौ ७।८१
सोमः पवमानः २०।१३७ (४-६)

## खिलानि।

कुन्तापसूक्तानि २०।१२७-१३७; लिलम् २०।४९

## यज्ञादिकम्।

ऋतस्य यज्ञः ५।१२; घर्मः ७।७३
तपः ७।६१; दर्भः १९।३२,३३
नवशालायां पुरहोमः ५।२६; पितृमेधः १८।१,२,३,४
यज्ञः ७।९७;१९।१,५८,५९; वेदी ७।९९; हविः ७।९८

## कालः।

अमावास्या ७।७९; कालः १९।५३,५४
पूर्णिमा ७।८०; रात्रिः १९।४७,४८,४९,५०

## पश्वादिकम्।

अघ्न्या ६-७०;७-७५; अश्वः १९-२५; ऋषभ. ९-४
गावः४ २१; गोकर्णयोर्लक्ष्मकरणम्६-१४१; गोष्ठः ३-१४
गौः ६-३१;७-१०४;९।३; दधिक्राः २०-१३७(३)
पशवः २-३४; पशुपोषणम् ३-२८; पशुसंवर्धनम् २-२६
ब्रह्मगवी ५-१८,१९; १२-५, वशा गौः १०-१०;१२-४
-याजी ६-९२; शतौदना गौः १०-९

## वैश्यव्यवसायः।

कृषिः ३-१७; वाणिज्यम् ३-१५

# अथर्ववेदे काण्डानुसारेण मन्त्रसंख्या।

| काण्डं | प्रपाठकः | सूक्तानि | कांडे सूक्तानि | मंत्रसंख्या | कांडे मंत्रसंख्या | पृष्ठानि |
|---|---|---|---|---|---|---|
| १ | १ | १६ | | ७४ | | १— ७ |
| | २ | १९ | ३५ | ७९ | १५३ | ७— १४ |
| २ | ३ | १७ | | ५९ | | १५— २२ |
| | [illegible] | १९ | ३६ | १०८ | २०७ | २२— ३१ |
| ३ | ५ | १५ | | १११ | | ३२— ४१ |
| | ६ | १६ | ३१ | ११९ | २३० | ४२— ५२ |
| ४ | ७ | २० | | १६९ | | ५३— ६७ |
| | ८ | १० | | ७१ | | ६७— ७३ |
| | ९ | १० | ४० | ८४ | ३२४ | ७३— ८० |
| ५ | १० | ७ | | ७२ | | ८१— ८६ |
| | ११ | ८ | | ८२ | | ८७— ९३ |
| | १२ | १६ | ३१ | २२२ | ३७६ | ९३—१०९ |
| ६ | १३ | ५१ | | १५८ | | ११०—१२३ |
| | १४ | ५१ | | १५७ | | १२३—१३७ |
| | १५ | ४० | १४२ | १३९ | ४५४ | १३७—१४८ |
| ७ | १६ | ५९ | | १३६ | | १४९—१६२ |
| | १७ | ५९ | ११८ | १५० | २८६ | १६२—१७५ |
| ८ | १८ | ५ | | १२२ | | १७६—१८५ |
| | १९ | ५ | १० | १७१ | २९३ | १८५—१९५ |
| ९ | २० | ५ | | १४२ | | १९६—२०७ |
| | २१ | ५ | १० | १७१ | ३१३ | २०७—२१८ |
| १० | २२ | ५ | | १६६ | | २१९—२३१ |
| | २३ | ५ | १० | १८४ | ३५० | २३१—२४४ |
| ११ | २४ | ५ | | १७६ | | २४५—२५९ |
| | २५ | ४ | ९ | १३७ | ३११ | २५९—२६८ |
| १२ | २६ | ३ (३०) | | १४८ | | २६९—२८० |
| | २७ | २ | ५ | १५६ | ३०४ | २८०—२९० |
| १३ | २८ | ४ | ४ | १८८ | १८८ | २९१—३०४ |
| १४ | २९ | २ | २ | १३९ | १३९ | ३०५—३१४ |
| १५ | ३० | १८ | १८ | २२० | २२० | ३१५—३२६ |
| १६ | ३१ | ९ | ९ | १०३ | १०३ | ३२७—३३५ |
| १७ | ३२ | १ | १ | ३० | ३० | ३३६—३३९ |
| १८ | ३३ | २ | | १२१ | | ३४०—३४८ |
| | ३४ | २ | ४ | १६२ | २८३ | ३४८—३६० |
| १९ | ३५ | ७२ | ७२ | ४५३ | ४५३ | ३६१—३९९ |
| २० | ३६ | १४३ | १४३ | ९५८ | ९५८ | ३९९—४५६ |
| सर्वयोगः २० | ३६ | ७३० | ७३० | ५९७७ | ५९७७ परीशिष्टस ४५७-५२० | |





# अथर्ववेद-संहिता ।

## प्रथमं काण्डम् ।

### ( १ ) मेधाजननम् ।

१-४ अथर्वा । वाचस्पतिः । अनुष्टुप्, ४ चतुष्पदा विराडुरोबृहती ।

[अथ प्रथमः प्रपाठकः॥१॥]

अनुवाकाङ्कः [१] ॐ ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १ ॥
पुनरेहि वाचस्पते देवेन मनसा सह ।
वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥ २ ॥
इहैवाभि वि तनूभे आर्त्नी इव ज्यया ।
वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम् ॥ ३ ॥
उपहूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयताम् ।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४ ॥ (४)

### ( २ ) रोगोपशमनम् ।

१-४ अथर्वा । पर्जन्यः ( पृथिवी, इन्द्रः, चन्द्रमाश्च ) । अनुष्टुप्, ३ त्रिपदा विराण्नामगायत्री ।

विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम् ।
विद्मो ष्वस्य मातरं पृथिवीं भूरिवर्पसम् ॥ १ ॥
ज्याके परि णो नमाश्मानं तन्वं कृधि ।
वीडुर्वरीयोऽरातीरप द्वेषांस्या कृधि ॥ २ ॥
वृक्षं यद्गावः परिषस्वजाना अनुस्फुरं शरमर्चन्त्यृभुम् ।
शरुमस्मद्यावय दिद्युमिन्द्र ॥ ३ ॥
यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम् ।
एवा रोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् ॥ ४ ॥ (८)

## (३) मूत्रमोचनम्।

१-९ अथर्वा। १ पर्जन्यः, २ मित्रः, ३ वरुणः, ४ चन्द्रः, ५ सूर्यः, (१-९ मूत्रमोचनम्)। अनुष्टुप्, १-५ पथ्यापङ्क्तिः।

विद्मा शरस्यं पितरं पर्जन्यं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ १ ॥
विद्मा शरस्यं पितरं मित्रं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ २ ॥
विद्मा शरस्यं पितरं वरुणं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ३ ॥
विद्मा शरस्यं पितरं चन्द्रं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ४ ॥
विद्मा शरस्यं पितरं सूर्यं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ५ ॥
यदान्त्रेषु गवीन्योर्यद्वस्तावधि संश्रुतम्।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ६ ॥
प्र ते भिनद्मि मेहनं वर्त्रं वेशन्त्या इव।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ७ ॥
विषितं ते वस्तिबिलं समुद्रस्योदधेरिव।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ८ ॥
यथेषुका परापतदवसृष्टाधि धन्वनः।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ९ ॥ (१७)

## (४) अपां भेषजम्।

१-४ सिन्धुद्वीपः। (अपांनपात्, सोमः,) आपः। गायत्री, ४ पुरस्ताद्बृहती।

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम्। पृञ्चतीर्मधुना पयः ॥ १ ॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरम् ॥ २ ॥
अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः। सिन्धुभ्यः कर्त्वं हविः ॥ ३ ॥
अप्स्व१न्तरमृतमप्सु भेषजम्।
अपामुत प्रशस्तिभिरश्वा भवथ वाजिनो गावो भवथ वाजिनीः ॥ ४ ॥ (२१)

## ( ५ ) अपां भेषजम् ।

१-४ *सिन्धुद्वीपः* । ( अपांनपात्, सोमः, ) आपः । गायत्री, ४ वर्धमाना ।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २ ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ ४ ॥ (२५)

## ( ६ ) अपां भेषजम् ।

१-४ सिन्धुद्वीपः, (अथर्वा कृतिर्वा) । (अपांनपात्,) आपः, २ आपः सोमोऽग्निश्च । गायत्री, ४ पथ्यापङ्क्तिः ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ १ ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ २ ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ ३ ॥
शं न आपो धन्वन्या३ः शमु सन्त्वनूप्या३ः ।
शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः शिवा नः सन्तु वार्षिकीः ॥ ४ ॥ (२९)

॥ इति प्रथमोऽनुवाकः ॥१॥

## ( ७ ) यातुधाननाशनम् ।

१-७ चातनः । अग्निः ( जातवेदाः ), ३ अग्नीन्द्रौ । अनुष्टुप्, ५ त्रिष्टुप् ।

[२] स्तुवानमग्न आ वह यातुधानं किमीदिनम् ।
त्वं हि देव वन्दितो हन्ता दस्योर्बभूविथ ॥ १ ॥
आज्यस्य परमेष्ठिन् जातवेदस्तनूवशिन् ।
अग्ने तौलस्य प्राशान यातुधानान् वि लापय ॥ २ ॥
वि लपन्तु यातुधाना अत्त्रिणो ये किमीदिनः ।
अथेदमग्ने नो हविरिन्द्रश्च प्रति हर्यतम् ॥ ३ ॥
अग्निः पूर्व आ रभतां प्रेन्द्रो नुदतु बाहुमान् ।
ब्रवीतु सर्वो यातुमानयमस्मीत्येत्य ॥ ४ ॥
पश्याम ते वीर्यं जातवेदः प्र णो ब्रूहि यातुधानान्नृचक्षः ।
त्वया सर्वे परितप्ताः पुरस्तात्त आ यन्तु प्रब्रुवाणा उपेदम् ॥५॥ (३४)

आ रभस्व जातवेदोऽस्माकार्थाय जज्ञिषे ।
दूतो नो अग्ने भूत्वा यातुधानान् वि लोपय ॥ ६ ॥
त्वमग्ने यातुधानानुपबद्धाँ इहा वह ।
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु ॥ ७ ॥ (३६)

## (८) यातुधाननाशनम् ।

१-४ चातनः । १-२ बृहस्पतिः, अग्नीषोमौ च; ३-४ अग्निः (जातवेदाः) । १-३ अनुष्टुप्, ४ बार्हतगर्भा त्रिष्टुप् ।

इदं हविर्यातुधानान् नदी फेनमिवा वहत् ।
य इदं स्त्री पुमानकरिह स स्तुवतां जनः ॥ १ ॥
अयं स्तुवान आगमदिमं स्म प्रति हर्यत ।
बृहस्पते वशे लब्ध्वाग्नीषोमा वि विध्यतम् ॥ २ ॥
यातुधानस्य सोमप जहि प्रजां नयस्व च ।
नि स्तुवानस्य पातय परमक्ष्युतावरम् ॥ ३ ॥
यत्रैषामग्ने जनिमानि वेत्थ गुहा सतामत्त्रिणां जातवेदः ।
तांस्त्वं ब्रह्मणा वावृधानो जह्येषां शततर्हमग्ने ॥ ४ ॥ (४०)

## (९) विजयाय प्रार्थना ।

१-४ अथर्वा । १ वसवः, इन्द्रः, पूषा, वरुणः, मित्रः, अग्निः, आदित्याः, विश्वे देवाः; २ देवाः, सूर्यः, अग्निः, हिरण्यं, ३-४ अग्निः (जातवेदाः) । त्रिष्टुप् ।

अस्मिन्वसु वसवो धारयन्त्विन्द्रः पूषा वरुणो मित्रो अग्निः ।
इममादित्या उत विश्वे च देवा उत्तरस्मिन् ज्योतिषि धारयन्तु ॥१॥
अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥ २ ॥
येनेन्द्राय समभरः पयांस्युत्तमेन ब्रह्मणा जातवेदः ।
तेन त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्य आ धेह्येनम् ॥ ३ ॥
ऐषां यज्ञमुत वर्चो ददेऽहं रायस्पोषमुत चित्तान्यग्ने ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥ ४ ॥ (४४)




## ( १० ) पाश-विमोचनम् ।

१-४ अथर्वा । १ असुरः, २-४ वरुणः । त्रिष्टुप्, ३ ककुम्मती अनुष्टुप्, ४ अनुष्टुप् ।

अयं देवानामसुरो वि राजति वशा हि सत्या वरुणस्य राज्ञः ।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि ॥ १ ॥
नमस्ते राजन्वरुणास्तु मन्यवे विश्वं ह्युग्र निचिकेषि द्रुग्धम् ।
सहस्रमन्यान्प्र सुवामि साकं शतं जीवाति शरदस्तवायम् ॥ २ ॥
यदुवक्थानृतं जिह्वया वृजिनं बहु ।
राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम् ॥ ३ ॥
मुञ्चामि त्वा वैश्वानरादर्णवान्महतस्परि ।
सजातानुग्रेहा वद ब्रह्म चाप चिकीहि नः ॥ ४ ॥ (४८)

## ( ११ ) नारी-सुखप्रसूतिः ।

१-६ अथर्वा । पूषा, अर्यमा, वेधाः, दिशः, देवाः । पङ्क्तिः, २ अनुष्टुप्, ३ चतुष्पदोष्णिग्गर्भा ककुम्मत्यनुष्टुप्, ४-६ पथ्यापङ्क्तिः ।

वषट् ते पूषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः ।
सिस्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ॥ १ ॥
चतस्रो दिवः प्रदिशश्चतस्रो भूम्या उत ।
देवा गर्भं समैरयन् तं व्यूर्णुवन्तु सूतवे ॥ २ ॥
सूषा व्यूर्णोतु वि योनिं हापयामसि ।
श्रथया सूषणे त्वमव त्वं बिष्कले सृज ॥ ३ ॥
नेव मांसे न पीवसि नेव मज्जस्वाहतम् ।
अवैतु पृश्नि शेवलं शुने जराय्वत्तवेऽव जरायु पद्यताम् ॥ ४ ॥
वि ते भिनद्मि मेहनं वि योनिं वि गवीनिके ।
वि मातरं च पुत्रं च वि कुमारं जरायुणाव जरायु पद्यताम् ॥ ५ ॥
यथा वातो यथा मनो यथा पतन्ति पक्षिणः ।
एवा त्वं दशमास्य साकं जरायुणा पतावं जरायु पद्यताम् ॥ ६ ॥ (५४)

॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

## ( १२ ) यक्ष्मनाशनम्।

१-४ भृग्वङ्गिराः। यक्ष्मनाशनम्। जगती ( त्रिष्टुप् ? ), ४ अनुष्टुप्।

[३] जरायुजः प्रथम उस्रियो वृषा वातभ्रजा स्तनयन्नेति वृष्ट्या ।
स नो मृडाति तन्व ऋजुगो रुजन् य एकमोजस्त्रेधा विचक्रमे ॥ १ ॥
अङ्गेअङ्गे शोचिषा शिश्रियाणं नमस्यन्तस्त्वा हविषा विधेम ।
अङ्कान्त्समङ्कान् हविषा विधेम यो अग्रभीत्पर्वास्या ग्रभीता ॥ २ ॥
मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य ।
यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्त्सचतां पर्वतांश्च ॥ ३ ॥
शं मे परस्मै गात्राय शमस्त्ववराय मे ।
शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे मम ॥ ४ ॥ (५८)

## ( १३ ) विद्युत्।

१-४ भृग्वङ्गिराः। विद्युत्। अनुष्टुप्, ३ चतुष्पाद्विराड् जगती, ४ त्रिष्टुप्परा बृहतीगर्भा पङ्क्तिः।

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ॥ १ ॥
नमस्ते प्रवतो नपाद्यतस्तपः समूहसि ।
मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ॥ २ ॥
प्रवतो नपान्नम एवास्तु तुभ्यं नमस्ते हेतये तपुषे च कृण्मः ।
विद्म ते धाम परमं गुहा यत्समुद्रे अन्तर्निहितासि नाभिः ॥ ३ ॥
यां त्वा देवा असृजन्त विश्व इषुं कृण्वाना असनाय धृष्णुम् ।
सा नो मृड विदथे गृणाना तस्यै ते नमो अस्तु देवि ॥ ४ ॥ (६२)

## ( १४ ) कुलपा कन्या।

१-४ भृग्वङ्गिराः। (वरुणो), यमो (वा)। अनुष्टुप्, १ ककुम्मती अनुष्टुप्, ३ चतुष्पाद्विराट्।

भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम् ।
महाबुध्न इव पर्वतो ज्योक् पितृष्वास्ताम् ॥ १ ॥
एषा ते राजन्कन्या वधूर्नि धूयतां यम ।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः ॥ २ ॥ (६४)

एषा ते कुलपा राजन्तामु ते परि दद्मसि ।
ज्योक् पितृष्वासाता आ शीर्ष्णः समोप्यात् ॥ ३ ॥
असितस्य ते ब्रह्मणा कश्यपस्य गयस्य च ।
अन्तःकोशमिव जामयोऽपि नह्यामि ते भगम् ॥ ४ ॥ (६६)

( १५ ) पुष्टिकर्म ।

१-४ अथर्वा । सिन्धवः, (वाताः, पतत्रिणः) । अनुष्टुप्, २ भुरिक्पथ्या पङ्क्तिः ।

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः ।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येण हविषा जुहोमि ॥ १ ॥
इहैव हवमा यात म इह संस्रावणा उतेमं वर्धयता गिरः ।
इहैतु सर्वो यः पशुरस्मिन् तिष्ठतु या रयिः ॥ २ ॥
ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः ।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ॥ ३ ॥
ये सर्पिषः संस्रवन्ति क्षीरस्य चोदकस्य च ।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ॥ ४ ॥ (७०)

( १६ ) शत्रुबाधनम् ।

१-४ चातनः । १ अग्निः, २ इन्द्रः, वरुणः, (२-४ दधत्यं सीसम्) । अनुष्टुप्, ४ ककुम्मती अनुष्टुप् ।

येऽमावास्यां३ रात्रिमुदस्थुर्व्राजमत्त्रिणः ।
अग्निस्तुरीयो यातुहा सो अस्मभ्यमधि ब्रवत् ॥ १ ॥
सीसायाध्याह वरुणः सीसायाग्निरुपावति ।
सीसं म इन्द्रः प्रायच्छत्तदङ्ग यातुचातनम् ॥ २ ॥
इदं विष्कन्धं सहत इदं बाधते अत्त्रिणः ।
अनेन विश्वा ससहे या जातानि पिशाच्याः ॥ ३ ॥
यदि नो गां हंसि यद्यश्वं यदि पूरुषम् ।
तं त्वा सीसेन विध्यामो यथा नोऽसो अवीरहा ॥ ४ ॥ (७४)

॥ इति तृतीयोऽनुवाकः ॥३॥ [इति प्रथमः प्रपाठकः॥१॥]

( १७ ) रुधिरस्रावनिवृत्तये धमनीबन्धनम् ।

[अथ द्वितीयः प्रपाठकः॥२॥] १-४ ब्रह्मा । योषितः धमन्यश्च । अनुष्टुप्, १ भुरिगनुष्टुप्, ४ त्रिपदार्षी गायत्री ।

[४] अमूर्या यन्ति योषितो हिरा लोहितवाससः ।
अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥ १ ॥ (७५)

तिष्ठा॑वरे॒ तिष्ठ॑ पर उ॒त त्वं तिष्ठ॑ मध्यमे ।
क॒नि॒ष्ठि॒का च॒ तिष्ठ॑ति ति॒ष्ठादि॒द्ध॒मनि॑र्म॒ही ॥ २ ॥
श॒तस्य॑ ध॒मनी॑नां स॒हस्र॑स्य हि॒राणा॑म् ।
अस्थु॒रिन्म॑ध्य॒मा इ॒माः सा॒कमन्ता॑ अरंसत ॥ ३ ॥
परि॑ वः॒ सिक॑तावती ध॒नूर्बृ॑ह॒त्य॑क्रमीत् । तिष्ठ॑ते॒लय॑ता॒ सु क॑म् ॥४॥ (७८)

( १८ ) अलक्ष्मीनाशनम् ।

१-४ द्रविणोदाः । विनायकः ( २ सविता, वरुणः, मित्रः, अर्यमा, देवाः ३ सविता ) ।
१ विराडुपरिष्टाद्बृहती, २ निचृज्जगती, ३ विराडास्तारपङ्क्तिस्त्रिष्टुप्, ४ अनुष्टुप् ।

निर्ल॒क्ष्म्यं॑ ल॒लाम्यं॒१ निररा॑तिं सुवामसि ।
अथ॒ या भ॒द्रा तानि॑ नः प्र॒जाया॒ अरा॑तिं नयामसि ॥ १ ॥
निरर॑णिं स॒विता सा॑विषक् प॒दोर्निर्हस्त॑यो॒र्वरु॑णो मि॒त्रो अ॒र्यमा ।
निर॒स्मभ्य॒मनु॑मती॒ ररा॑णा प्रे॒मां दे॒वा अ॑साविषुः सौभ॑गाय ॥ २ ॥
यत्त॑ आ॒त्मनि॑ त॒न्वां॑ घो॒रमस्ति॒ यद्वा॒ केशे॑षु प्र॒ति॒चक्ष॑णे वा ।
सर्वं॒ तद्वा॒चाप॑ हन्मो व॒यं दे॒वस्त्वा॑ स॒विता सू॑दयतु ॥ ३ ॥
रिश्य॑पदीं॒ वृष॑दतीं गोषे॒धां वि॑ध॒मामु॒त ।
वि॒लीढ्यं॑ ल॒लाम्यं॒१ ता अ॒स्मन्ना॑शयामसि ॥ ४ ॥ (८२)

( १९ ) शत्रुनिवारणम् ।

१-४ ब्रह्मा । ईश्वरः, ( १ इन्द्रः, २ मनुष्येषवः, ३ रुद्रः, ४ देवाः ) । अनुष्टुप्,
२ पुरस्ताद्बृहती, ३ पथ्यापङ्क्तिः ।

*मा नो॑ विदन् वि॒व्या॒धिनो॒ मो अ॑भिव्या॒धिनो॑ विदन् ।*
आ॒राच्छ॑र॒व्या॑ अ॒स्मद्वि॒षू॑चीरिन्द्र पातय ॥ १ ॥
विष्व॑ञ्चो अ॒स्मच्छर॑वः पतन्तु॒ ये अ॒स्ता ये चा॒स्याः॑ ।
दैवी॑र्मनुष्येष॒वो म॒मामि॑त्रा॒न् वि वि॑ध्यत ॥ २ ॥
यो नः॒ स्वो यो अर॑णः सजा॒त उ॒त निष्ट्यो॒ यो अ॒स्माँ अ॑भि॒दास॑ति ।
रु॒द्रः श॑र॒व्य॑यैतान् म॒मामि॑त्रा॒न् वि वि॑ध्यतु ॥ ३ ॥
यः स॒पत्नो॒ योऽस॑पत्नो॒ यश्च॑ द्वि॒षञ्छपा॑ति नः ।
दे॒वास्तं सर्वे॑ धूर्वन्तु॒ ब्रह्म॒ वर्म॒ ममान्त॑रम् ॥ ४ ॥ (८६)

( २० ) शत्रुनिवारणम् ।

*१-४ अथर्वा । १ सोमः, मरुतः; २ मित्रावरुणौ, ३ वरुणः, ४ इन्द्रः । अनुष्टुप्, १ त्रिष्टुप् ।*

अदारसृद् भवतु देव सोमास्मिन्यज्ञे मरुतो मृडता नः ।
मा नो विदद्भिभा मो अशस्तिर्मा नो विदद् वृजिना द्वेष्या या ॥१॥
यो अद्य सेन्यो वधोऽघायूनामुदीरते ।
युवं तं मित्रावरुणावस्मद्यावयतं परि ॥ २ ॥
इतश्च यदमुतश्च यद्वधं वरुण यावय ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥ ३ ॥
शास इत्था महाँ अस्यमित्रसाहो अस्तृतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥ ४ ॥ (९०)

( २१ ) शत्रुनिवारणम् ।

१-४ अथर्वा । इन्द्रः । अनुष्टुप् ।

स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥ १ ॥
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
अधमं गमया तमो यो अस्माँ अभिदासति ॥ २ ॥
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥ ३ ॥
अपेन्द्र द्विषतो मनोऽप जिज्यासतो वधम् ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥ ४ ॥ (९४)

॥ इति चतुर्थोऽनुवाकः ॥४॥

( २२ ) हृद्रोग-कामिलानाशनम् ।

१-४ ब्रह्मा । सूर्यो, हरिमा हृद्रोगश्च । अनुष्टुप् ।

[५] अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते ।
गो रोहितस्य वर्णेन तेन त्वा परि दध्मसि ॥ १ ॥
परि त्वा रोहितैर्वर्णैर्दीर्घायुत्वाय दध्मसि ।
यथायमरपा असदथो अहरितो भुवत् ॥ २ ॥
या रोहिणीर्देवत्या३ गावो या उत रोहिणीः ।
रूपंरूपं वयोवयस्ताभिष्ट्वा परि दध्मसि ॥ ३ ॥ (९७)

शुकेषु ते हरिमाणं रोपणाकांसु दध्मसि ।
अथो हारिद्रवेषु ते हरिमाणं नि दध्मसि ॥ ४ ॥ (९८)

(२३) श्वेतकुष्ठनाशनम् ।

१-४ अथर्वा । वनस्पतिः ( असिक्निः ) । अनुष्टुप् ।

नक्तंजातास्योषधे रामे कृष्णे असिक्नि च ।
इदं रजनि रजय किलासं पलितं च यत् ॥ १ ॥
किलासं च पलितं च निरितो नाशया पृषत् ।
आ त्वा स्वो विशतां वर्णः परा शुक्लानि पातय ॥ २ ॥
असितं ते प्रलयनमास्थानमसितं तव ।
असिक्न्यस्योषधे निरितो नाशया पृषत् ॥ ३ ॥
अस्थिजस्य किलासस्य तनूजस्य च यत्त्वचि ।
दूष्या कृतस्य ब्रह्मणा लक्ष्म श्वेतमनीनशम् ॥ ४ ॥ (१०२)

( २४ ) श्वेतकुष्ठनाशनम् ।

१-४ ब्रह्मा । आसुरी वनस्पतिः । अनुष्टुप्, २ निचृत्पथ्यापङ्क्तिः ।

सुपर्णो जातः प्रथमस्तस्य त्वं पित्तमासिथ ।
तदासुरी युधा जिता रूपं चक्रे वनस्पतीन् ॥ १ ॥
आसुरी चक्रे प्रथमेदं किलासभेषजमिदं किलासनाशनम् ।
अनीनशत्किलासं सरूपामकरत्त्वचम् ॥ २ ॥
सरूपा नाम ते माता सरूपो नाम ते पिता ।
सरूपकृत्त्वमोषधे सा सरूपमिदं कृधि ॥ ३ ॥
श्यामा सरूपंकरणी पृथिव्या अध्युद्भृता ।
इदमू षु प्र साधय पुना रूपाणि कल्पय ॥ ४ ॥ (१०६)

( २५ ) ज्वर नाशनम् ।

१-४ भृग्वङ्गिराः । यक्ष्मनाशनोऽग्निः । त्रिष्टुप्, २-३ विराड्गर्भा, ४ पुरोऽनुष्टुप् ।

यदग्निरापो अदहत्प्रविश्य यत्राकृण्वन् धर्मधृतो नमांसि ।
तत्र त आहुः परमं जनित्रं स नः संविद्वान् परि वृङ्ग्धि तक्मन् ॥ १ ॥
यद्यर्चिर्यदि वासि शोचिः शकल्येषि यदि वा ते जनित्रम् ।
हूडुर्नामासि हरितस्य देव स नः संविद्वान् परि वृङ्ग्धि तक्मन् ॥ २ ॥ (१०८)

यदि चिन्नु त्वा धना जयन्तं रणेरणे अनुमदन्ति विप्राः ।
ओजीयः शुष्मिन्त्स्थिरमा तनुष्व मा त्वा दभन्दुरेवासः कशोकाः ॥ ७ ॥
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ८ ॥
नि तद्दधिषेऽवरे परे च यस्मिन्नाविथावसा दुरोणे ।
आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि ॥ ९ ॥
स्तुष्व वर्ष्मन्पुरुवर्त्मानं समृभ्वाणमिनतममाप्तमाप्त्यानाम् ।
आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ॥१०॥
इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजा तुरश्चिद्विश्वमर्णवत्तपस्वान् ॥११॥
एवा महान्बृहद्दिवो अथर्वावोचत्स्वां तन्व१मिन्द्रमेव ।
स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने शवसा वर्धयन्ति च ॥१२॥
चित्रं देवानां केतुरनीकं ज्योतिष्मान्प्रदिशः सूर्य उद्यन् ।
दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद्दुरितानि शुक्रः ॥१३॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्राद् द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१४॥
सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥१५॥ (६८६)

( १०८ )

१-३ नृमेधः । इन्द्रः । १ गायत्री, २ ककुप्, ३ पुर उष्णिक् ।

त्वं न इन्द्रा भरँ ओजो नृम्णं शतक्रतो विचर्षणे । आ वीरं पृतनाषहम् ॥ १ ॥
त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ । अधा ते सुम्नमीमहे ॥ २ ॥
त्वां शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे शतक्रतो । स नो रास्व सुवीर्यम् ॥ ३ ॥ (६८९)

( १०९ )

१-३ गोतमः । इन्द्रः । पंक्तिः ।

स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १ ॥ (६९०)

ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ३ ॥ (६९२)

( ११० )

१—३ श्रुतकक्ष. सुकक्षो वा । इन्द्र. । गायत्री ।

इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥ १ ॥
यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त संसदः । इन्द्रं सुते हवामहे ॥ २ ॥
त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्वर्धन्तु नो गिरः ॥ ३ ॥ (६९५)

( १११ )

१-३ पर्वतः । इन्द्रः । उष्णिक् ।

यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये । यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ १ ॥
यद्वा शक्र परावति समुद्रे अधि मन्दसे । अस्माकमित्सुते रणा समिन्दुभिः ॥ २ ॥
यद्वासि सुन्वतो वृधो यजमानस्य सत्पते । उक्थे वा यस्य रण्यसि समिन्दुभिः ॥ ३ ॥(६९८)

( ११२ )

१-३ सुकक्षः । इन्द्रः । गायत्री ।

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥ १ ॥
यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे । उतो तत्सत्यमित्तव ॥ २ ॥
ये सोमासः परावति ये अर्वावति सुन्विरे । सर्वांस्ताँ इन्द्र गच्छसि ॥ ३ ॥ (७०१)

( ११३ )

१-२ भर्गः । इन्द्रः । प्रगाथः ।

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥
तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥ २ ॥ (७०३)

( ११४ )

१-२ सौभरिः । इन्द्रः । गायत्री ।

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि । युधेदापित्वमिच्छसे ॥ १ ॥(७०४)

नकीं रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
यदा कृणोषि नदुनुं समूहस्यादित्पितेव हूयसे                    ॥ २ ॥   (७०५)

( ११५ )

१-२ वत्सः । इन्द्रः । गायत्री ।

अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ       । अहं सूर्य इवाजनि   ॥ १ ॥
अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत्   । येनेन्द्रः शुष्ममिद्दधे   ॥ २ ॥
ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः     । ममेद्वर्धस्व सुष्टुतः   ॥ ३ ॥(७०८)

( ११६ )

१-२ मेध्यातिथिः । इन्द्रः । बृहती ।

मा भूम निष्ट्या इवेन्द्र त्वदरणा इव ।
वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि                    ॥ १ ॥
अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन् ।
सकृत्सु ते महता शूर राधसानु स्तोमं मुदीमहि                    ॥ २ ॥   (७१०)

( ११७ )

१-३ वसिष्ठः । इन्द्रः । विराट् ।

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा                    ॥ १ ॥
यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि । स त्वामिन्द्र प्रभूवसो ममत्तु ॥२॥
बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् । इमा ब्रह्म सधमादे जुषस्व ॥३॥

( ११८ )                    (७१३)

( १-४ ) १-२ भर्गः, ३-४ मेध्यातिथिः । इन्द्रः । प्रगाथः ।

शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि                    ॥ १ ॥
पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदा भर                    ॥ २ ॥
इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये                    ॥ ३ ॥   (७१६)

इन्द्रो मुह्ना रोदसी पप्रथुच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ ४ ॥ (७१७)

( ११९ )

( १-२ ) १ आयुः, २ श्रुष्टिगुः । इन्द्रः । प्रगाथः ।

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १ ॥
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवः ॥ २ ॥ (७१९)

( १२० )

१-२ देवातिथिः । इन्द्रः । प्रगाथः ।

यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १ ॥
यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा ब्रह्मभि स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥ (७२१)

( १२१ )

१-२ वसिष्ठः । इन्द्रः । प्रगाथः ।

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥
न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २ ॥ (७२३)

( १२२ )

१-३ शुन शेपः । इन्द्रः । गायत्री ।

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १ ॥
आ घ त्वावान्त्मनाप्त स्तोतृभ्यो धृष्णावियानः । ऋणोरक्षं न चक्र्योः ॥ २ ॥
आ यद्दुवः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न शचीभिः ॥ ३ ॥ (७२६)

( १२३ )

१-२ कुत्सः । सूर्यः । त्रिष्टुप् ।

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ १ ॥ (७२७)

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥ २ ॥ (७२८)

( १२४ )

( १-६ ) १-३ वामदेवः, ४-६ भुवनः । इन्द्रः । १-२ गायत्री, ३ पादनिचृत्, ४-६ त्रिष्टुप् ।

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १ ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥ २ ॥
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥
इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ॥ ४ ॥
आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्ववितां तनूनाम् ।
हत्वाय देवा असुरान्यदायन्देवा देवत्वमभिरक्षमाणाः ॥ ५ ॥
प्रत्यञ्चमर्कमनयं छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ६ ॥ (७३४)

( १२५ )

( १-७ ) सुकीर्तिः । इन्द्रः, ४-५ अश्विनौ । त्रिष्टुप्, ४ अनुष्टुप् ।

अपेन्द्र प्राचो मघवन्नमित्रानपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन्मदेम ॥ १ ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २ ॥
नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।
गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ॥ ३ ॥
युवं सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ ४ ॥
पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥
इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥ (७४०)

स सुत्रामा स्ववाँ इन्द्रो अस्मदाराच्चिद् द्वेषः सनुतर्युयोतु ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ७ ॥ (७४१)

( १२६ )

१-२३ वृषाकपिरिन्द्राणी च । इन्द्र । पङ्क्तिः ।

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥ १ ॥
परा हीन्द्र धावसि वृषाकपेरति व्यथिः ।
नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः ॥ २ ॥
किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसीदु न्वर्यो वा पुष्टिमद्वसु विश्वस्मादिन्द्र उत्तरः ॥ ३ ॥
यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥ ४ ॥
प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥ ५ ॥
न मत्स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत्प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥
उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिन्द्र उत्तरः ॥ ७ ॥
किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥
अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥
संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥
इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥ (७५२)

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥१२॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥१३॥

उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः ॥१४॥

वृषभो न तिग्मशृङ्गोऽन्तर्यूथेषु रोरुवत् ।
मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥१५॥

न सेशे यस्य रम्बतेऽन्तरा सक्थ्याऽ कपृत् ।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥१६॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते ।
सेदीशे यस्य रम्बतेऽन्तरा सक्थ्याऽ कपृद्विश्वस्मादिन्द्र उत्तरः ॥१७॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत् ।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः ॥१८॥

अयमेमि विचाकशद्विचिन्वन्दासमार्यम् ।
पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः ॥१९॥

धन्व च यत्कृन्तत्रं च कति स्वित्ता वि योजना ।
नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥२०॥

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥२१॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्वऽस्य पुल्वघो मृगः कमगं जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥२२॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिन्द्र उत्तरः ॥२३॥ (७६४)

## ॥ अथ कुन्तापसूक्तानि ॥

( १२७ )

( खिलानि । )

इदं जना उप॑ श्रुत नरा॒शंस॒ स्त॑विष्यते ।
प॒ष्टिं स॒हस्रा॑ नव॒तिं च॑ कौरम॒ आ रुश॑मेषु दद्महे ॥ १ ॥
उष्ट्रा॒ यस्य॑ प्रवा॒हणो॑ व॒धूम॑न्तो द्वि॒र्दश॑ । व॒र्ष्मा॑ रथ॑स्य॒ नि जि॑हीडते दि॒व ई॒पमा॑णा उप॒स्पृश॑ः ॥२॥
ए॒ष इ॒षाय॑ मामहे श॒तं नि॒ष्कान्दश॒ स्रजः॑ । त्रीणि॑ श॒तान्यर्व॑तां स॒हस्रा॒ दश॒ गोना॑म् ॥३॥
वच्य॑स्व॒ रेभ॑ वच्यस्व वृ॒क्षे न प॒क्वे श॒कुनः॑ । नष्टे॑ जि॒ह्वा च॑र्चरीति क्षु॒रो न भु॒रिजो॑रिव ॥४॥
प्र रे॒भासो॑ मनी॒षा वृ॒षा गाव॑ इवेरते । अ॒मो॒तपु॒त्रका॒ ए॒षाम॒मोत॑ गा इ॑वासते ॥५॥
प्र रे॑भ॒ धीं भ॑रस्व गो॒विदं॑ वसु॒विद॑म् । दे॒वत्रे॒मां वाचं॑ श्री॒णीही॒षुर्नावी॑रस्तार॑म् ॥६॥
राज्ञो॑ विश्व॒जनी॑नस्य यो दे॒वोऽमर्त्यां॒ अति॑ । वै॒श्वान॒रस्य॒ सुष्टु॑तिमा सु॒नोता॑ परि॒क्षित॑ः ॥७॥
प॒रि॒च्छिन्न॑ः क्षेम॑मकरो॒त्तम॒ आस॑नमा॒चर॑न् । कु॒लाय॒न्कृण्वन्कौर॑व्यः॒ पति॒र्वद॑ति जा॒यया॑ ॥८॥
क॒त॒रत्त॒ आ ह॑राणि॒ दधि॒ मन्थां॒ परि॒ श्रुत॑म् । जा॒याः पति॒ं वि पृ॑च्छति रा॒ष्ट्रे राज्ञः॑ परि॒क्षित॑ः ॥९॥
अ॒भीव॒स्वः प्र जि॑हीते॒ यव॑ः प॒क्वः प॒थो बिल॑म् ।
जन॑ः स भ॒द्रमेध॑ति रा॒ष्ट्रे राज्ञः॑ परि॒क्षित॑ः ॥१०॥
इन्द्र॑ः का॒रुम॑बूबुध॒दुत्ति॑ष्ठ॒ वि च॑रा॒ जन॑म् । ममेदु॒ग्रस्य॒ चर्कृ॑धि॒ सर्व॒ इत्ते॑ पृणाद॒रिः ॥११॥
इ॒ह गाव॒ः प्रजा॑यध्वमि॒हाश्वा॑ इ॒ह पूरु॑षाः । इ॒हो स॒हस्र॑दक्षि॒णोऽपि॑ पू॒षा नि षी॑दति ॥१२॥
नेमा इ॑न्द्र॒ गावो॑ रिष॒न्मो आ॒सां॒ गोप॑ रीरिषत् । मासा॑ममि॒त्रयु॒र्जन॒ इन्द्र॒ मा स्ते॒न ई॑शत ॥१३॥
उप॑ नो न रमसि॒ सूक्ते॑न॒ वच॑सा व॒यं भ॒द्रेण॒ वच॑सा व॒यम् ।
वना॑दधिध्व॒नो गि॒रो न रि॑ष्येम क॒दा च॒न ॥१४॥ (७७८)

( १२८ )

यः स॒भेयो॑ विदथ्य॑ः सु॒त्वा य॒ज्वाथ॒ पूरु॑षः ।
सूर्यं॒ चामू॒ रि॒शाद॒सस्तद्दे॒वाः प्राग॑कल्पयन् ॥ १ ॥
यो जा॒म्या अप्र॑थय॒स्तद्यत्सखा॑यं॒ दुधू॑र्षति । ज्येष्ठो॒ यद॑प्रचेता॒स्तदा॑हु॒रध॑रा॒गिति॑ ॥ २ ॥
यद्भ॒द्रस्य॒ पुरु॑षस्य पु॒त्रो भव॑ति दाधृ॒षिः । तद्विप्रो॒ अब्र॑वीदु॒ तद्ग॑न्ध॒र्वः काम्यं॒ वच॑ः ॥ ३ ॥
यश्च॑ प॒णि र॒घुंजि॒ष्ठ्यो यश्च॑ दे॒वाँ अदा॑शुरिः । धीरा॑णां॒ शश्व॑ताम॒हं तद॑पा॒गिति॑ शुश्रुम ॥ ४ ॥
(७८२)

ये च देवा अयजन्ताथो ये च परादुदिः ।
सूर्यो दिवमिव गत्वाय मघवा नो वि रप्शते ॥ ५ ॥

योनाक्ताक्षो अनभ्यक्तो अमणिवो अहिरण्यवः । अब्रह्मा ब्रह्मणः पुत्रस्तोता कल्पेषु संमिता ॥६॥

य आक्ताक्षः सुभ्यक्तः सुमणिः सुहिरण्यवः । सुब्रह्मा ब्रह्मणः पुत्रस्तोता कल्पेषु संमिता ॥७॥

अप्रपाणा च वेशन्ता रेवाँ अप्रतिदिश्ययः । अयभ्या कन्या कल्याणी तोता कल्पेषु संमिता ॥८॥

सुप्रपाणा च वेशन्ता रेवान्त्सुप्रतिदिश्ययः । सुयभ्या कन्या कल्याणी तोता कल्पेषु संमिता ॥९॥

परिवृक्ता च महिषी स्वस्त्या च युधिंगमः । अनाशुरश्वायामी तोता कल्पेषु संमिता ॥१०॥

वावाता च महिषी स्वस्त्या च युधिंगमः । श्वाशुरश्वायामी तोता कल्पेषु संमिता ॥११॥(६)

यदिन्द्रादो दाशराज्ञे मानुषं वि गाहथाः । विरूपः सर्वस्मा आसीत्सह यक्षाय कल्पते ॥१२॥

त्वं वृषाक्षुं मघवन्नम्रं मर्याकरो रविः । त्वं रौहिणं व्यास्यो वि वृत्रस्याभिनच्छिरः ॥१३॥

यः पर्वतान्व्यदधाद्यो अपो व्यगाहथाः । इन्द्रो यो वृत्रहान्महं तस्मादिन्द्र नमोऽस्तु ते ॥१४॥

पृष्ठं धावन्तं हर्योरौच्चैःश्रवसमब्रुवन् । स्वस्त्यश्व जैत्रायेन्द्रमा वह सुस्रजम् ॥१५॥

ये त्वा श्वेता अजैश्रवसो हार्यो युञ्जन्ति दक्षिणम् ।
पूर्वा नमस्य देवानां बिभ्रदिन्द्र महीयते ॥१६॥ (७) (७९४)

(१२९)

एता अश्वा आ प्लवन्ते ॥ १ ॥ प्रतीपं प्राति सुत्वनम् ॥ २ ॥

तासामेका हरिक्निका ॥ ३ ॥ हरिक्निके किमिच्छसि ॥ ४ ॥

साधुं पुत्रं हिरण्ययम् ॥ ५ ॥ क्वाहतं परास्यः ॥ ६ ॥

यत्रामूस्तिस्रः शिंशपाः ॥ ७ ॥ परि त्रयः ॥ ८ ॥

पृदाकवः ॥ ९ ॥ शृङ्गं धमन्त आसते ॥१०॥

अयन्महा ते अर्वाहः ॥११॥ स इच्छकं सघाघते ॥१२॥

सघाघते गोमीद्या गोगतीरिति ॥१३॥ पुमां कुस्ते निमिच्छसि ॥१४॥

पल्प बद्ध वयो इति ॥१५॥ बद्ध वो अघा इति ॥१६॥

अजागार केविका ॥१७॥ अश्वस्य वारो गोशपद्यके ॥१८॥

श्येनीपती सा ॥१९॥ अनामयोपजिह्विका ॥२०॥ (८१४)

(१३०)

को अर्य बहुलिमा इषूनि ॥ १ ॥ को असिद्याः पयः ॥ २ ॥

को अर्जुन्याः पयः ॥ ३ ॥ कः कार्ष्ण्याः पयः ॥ ४ ॥ (८१८)

एतं पृच्छ कुहं पृच्छ ॥ ५ ॥ कुहाकं पक्वकं पृच्छ ॥ ६ ॥
यवानो यतिस्वभिः कुभिः ॥ ७ ॥ अकुप्यन्तः कुपायकुः ॥ ८ ॥
आमणको मणत्सकः ॥ ९ ॥ देव त्वप्रतिसूर्य ॥१०॥
एनश्चिपङ्क्तिका हविः ॥११॥ प्रदुद्रुदो मघाप्रति ॥१२॥
शृङ्ग उत्पन्न ॥१३॥ मा त्वाभि सखा नो विदन् ॥१४॥
वशायाः पुत्रमा यन्ति ॥१५॥ इरावेदुमयं दत ॥१६॥
अथो इयन्नियन्निति ॥१७॥ अथो इयन्निति ॥१८॥
अथो श्वा अस्थिरो भवन् ॥१९॥ उयं यकांशलोकका ॥२०॥ (८३४)

( १३१ )

आमिनोनिति भद्यते ॥ १ ॥ तस्य अनु निभञ्जनम् ॥ २ ॥
वरुणो याति वस्वभिः ॥ ३ ॥ शतं वा भारती शवः ॥ ४ ॥
शतमाश्वा हिरण्ययाः । शतं रथ्या हिरण्ययाः ।
शतं कुथा हिरण्ययाः । शतं निष्का हिरण्ययाः ॥ ५ ॥
अहल कुश वर्त्तक ॥ ६ ॥ शफेन इव ओहते ॥ ७ ॥
आय वनेनती जनी ॥ ८ ॥ वनिष्ठा नाव गृह्यन्ति ॥ ९ ॥
इदं मह्यं मदूरिति ॥१०॥ ते वृक्षाः सह तिष्ठति ॥११॥
पाक बलिः ॥१२॥ शक बलिः ॥१३॥
अश्वत्थ खदिरो धवः ॥१४॥ अरदुपरम ॥१५॥
शयो हत इव ॥१७॥ व्याप पूरुषः ॥१७॥
अदूहमित्यां पूषकम् ॥१८॥ अत्यर्धर्च परस्वतः ॥१९॥
दौव हस्तिनो दृती ॥२०॥ (८४५)

( १३२ )

आदलाबुकमेककम् ॥ १ ॥ अलाबुकं निखातकम् ॥ २ ॥
कर्करिको निखातकः ॥ ३ ॥ तद्वात उन्मथायति ॥ ४ ॥
कुलायं कृणवादिति ॥ ५ ॥ उग्रं वनिषदाततम् ॥ ६ ॥
न वनिषदनाततम् ॥ ७ ॥ क एषां कर्करी लिखत् ॥ ८ ॥
क एषां दुन्दुभिं हनत् ॥ ९ ॥ यदीयं हनत्कथं हनत् ॥१०॥
देवी हनत्कुहनत् ॥११॥ पर्यागारं पुनःपुनः ॥१२॥ (८५६)

त्रीण्युष्ट्रस्य नामानि ॥१३॥ हिरण्यं इत्येके अब्रवीत् ॥१४॥
द्वौ वा ये शिशवः ॥१५॥ नीलशिखण्डवाहनः ॥१६॥ (८७०)

(१३३)

वितंतौ किरणौ द्वौ तावा पिनष्टि पूरुषः ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ १ ॥
मातुष्टे किरणौ द्वौ निवृत्तः पुरुषानृते ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ २ ॥
निगृह्य कर्णकौ द्वौ निरायच्छसि मध्यमे ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ३ ॥
उत्तानायै शयानायै तिष्ठन्ती वाव गूहसि ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ४ ॥
श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ५ ॥
अवश्लक्ष्णमिव भ्रंशदन्तर्लोममति ह्रदे ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ६ ॥ (८७६)

(१३४)

इहेत्थ प्रागपागुदगधराग् — अरालागुदभर्त्सथ ॥ १ ॥
इहेत्थ प्रागपागुदगधराग् — वत्साः पुरुषन्त आसते ॥ २ ॥
इहेत्थ प्रागपागुदगधराग् — स्थालीपाको वि लीयते ॥ ३ ॥
इहेत्थ प्रागपागुदगधराग् — स वै पृथु लीयते ॥ ४ ॥
इहेत्थ प्रागपागुदगधराग् — आष्टे लाहणि लीशाथी ॥ ५ ॥
इहेत्थ प्रागपागुदगधराग् — अक्ष्लिली पुच्छिलीयते ॥ ६ ॥ (८८२)

(१३५)

भुगित्यभिगतः शलित्यपक्रान्तः फलित्यभिष्ठितः ।
दुन्दुभिमाहननाभ्यां जरितरोथामो दैव ॥ १ ॥
कोशबिले रजनि ग्रन्थेर्धानमुपानहिं पादम् ।
उत्तमां जनिमां जन्यानुत्तमां जनीन्वर्त्मन्यात् ॥ २ ॥ (८८५)

अलाबूनि पृषातकान्यश्वत्थपलाशम् ।
पिपीलिकावटश्वसो विद्युत्स्वापर्णशफो गोशफो जरितरोऽथामो दैव ॥ ३ ॥
वीमे देवा अक्रंसताध्वर्यो क्षिप्रं प्रचर ।
सुसत्यमिद्गवामस्यासि प्रखुदसि ॥ ४ ॥
पत्नी यदृश्यते पत्नी यक्ष्यमाणा जरितरोऽथामो दैव ।
होता विष्टीमेन जरितरोऽथामो दैव ॥ ५ ॥
आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् ।
तां ह जरितः प्रत्यायंस्तामु ह जरितः प्रत्यायन् ॥ ६ ॥
तां ह जरितर्नः प्रत्यगृभ्णंस्तामु ह जरितर्नः प्रत्यगृभ्णः ।
अहानेतरसं न वि चेतनानि यज्ञानेतरसं न पुरोगवामः ॥ ७ ॥
उत श्वेत आशुपत्वा उतो पद्याभिर्यविष्ठः ।
उतेमाशु मानं पिपर्ति ॥ ८ ॥
आदित्या रुद्रा वसवस्त्वेनु त इदं राधः प्रति गृभ्णीह्यङ्गिरः ।
इदं राधो विभु प्रभु इदं राधो बृहत्पृथु ॥ ९ ॥
देवा ददत्वासुरं तद्वो अस्तु सुचेतनम् ।
युष्माँ अस्तु दिवेदिवे प्रत्येव गृभायत ॥१०॥
त्वमिन्द्र शर्मरिणा हव्यं पारावतेभ्यः ।
विप्राय स्तुवते वसुवनिं दुरश्रवसे वह ॥११॥
त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते ।
श्यामाकं पक्वं पीलु च वारस्मा अकृणोर्बहुः ॥१२॥
अरंगरो वावदीति त्रेधा बद्धो वरत्रया ।
इरामह प्रशंसत्यनिरामप सेधति ॥१३॥ (८९५)

(१२६)

यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत् ।
मुष्काविदस्या एजतो गोशफे शकुलाविव ॥ १ ॥
यदा स्थूलेन पससाणौ मुष्का उपावधीत् ।
विष्वञ्चा वस्या वर्धतः सिकतास्वेव गर्दभौ ॥ २ ॥
यदल्पिकास्वल्पिका कर्कधूकेवपद्यते ।
वासन्तिकमिव तेजनं यन्त्यवाताय वित्पति ॥ ३ ॥ (८९८

यद्देवासो ललामगुं प्रविंष्टीमिनमाविषुः ।
सकुला देदिश्यते नारी सत्यस्याक्षिभुवो यथा　　॥ ४ ॥

महानग्न्यतृप्नद्वि मोक्रदुदस्थानासरन् ।
शक्तिकाननना स्वचमशकं सक्तु पद्यम　　॥ ५ ॥

महानग्न्युलूखलमतिक्रामन्त्यब्रवीत् ।
यथा तव वनस्पते निरघ्नन्ति तथैवति　　॥ ६ ॥

महानग्न्युप ब्रूते भ्रष्टोऽथाप्यभूभुवः ।
यथैव ते वनस्पते पिप्पति तथैवति　　॥ ७ ॥

महानग्न्युप ब्रूते भ्रष्टोऽथाप्यभूभुवः ।
यथा वयो विदाह्य स्वर्गे नमवदह्यते　　॥ ८ ॥

महानग्न्युप ब्रूते स्वसावेशितं पसः ।
इत्थं फलस्य वृक्षस्य शूर्पे शूर्पं भजेमहि　　॥ ९ ॥

महानग्नी कृकवाकं शम्यया परि धावति ।
अयं न विद्म यो मृगः शीर्ष्णा हरति धाणिकाम्　　॥१०॥

महानग्नी महानग्नं धावन्तमनु धावति ।
इमास्तदस्य गा रक्ष यभ मामद्ध्यौदनम्　　॥११॥
सुदेवस्त्वा महानग्नीर्बबाधते महतः साधु खोदनम् ।
कुसं पीवरो नवत्　　॥१२॥
वशा दुग्धामिमाङ्गुरिं प्रसृजतोऽग्रतं परे ।
महान्वै भद्रो यभ मामद्ध्यौदनम्　　॥१३॥
विदेवस्त्वा महानग्नीर्विबाधते महतः साधु खोदनम् ।
कुमारिका पिङ्गलिका कार्द भस्मा कु धावति　　॥१४॥
महान्वै भद्रो बिल्वो महान्भद्र उदुम्बरः ।
महाँ अभिक्त बाधते महतः साधु खोदनम्　　॥१५॥
यः कुमारी पिङ्गलिका वसन्तं पीवरी लभेत् ।
तैलकुण्डमिमाङ्गुष्ठं रोदन्तं शुदमुद्धरेत्　　॥१६॥　(९११)

॥ इति कुन्तापसूक्तानि ॥

( १३७ )

(१-१४) १ शिरिम्बिठिः, २ बुध', ३ वामदेव', ४-६ ययातिः ७ ११ तिरश्चीराङ्गिरसो· घुतानो वा, १२-१४ सुकक्षः । १ अलक्ष्मीनाशनम्; २ इन्द्रः; ३ दधिक्रा', ४-६ सोमः पवमान ७-१४ इन्द्रश्च । १, ३, ४-६ अनुष्टुप्, २ जगती, ७-११ त्रिष्टुप्, १२—१४ गायत्री ।

यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः । हृता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥ १ ॥

कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ २ ॥

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ ३ ॥

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः । पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदाः॥४॥
इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् । वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥ ५ ॥
सहस्रधारः पवते समुद्रो वाचमीङ्खयः । सोमः पती रयीणां सखेन्द्रस्य दिवेदिवे ॥ ६ ॥

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥ ७ ॥

द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।
नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥ ८ ॥

अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः ।
विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥ ९ ॥

त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूल्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥१०॥

त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघन्थ ।
त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गा इन्द्र शच्येदविन्दः ॥११॥

तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥१२॥
इन्द्रः स दामने कृत ओजिष्ठः स मदे हितः । द्युम्नी श्लोकी स सोम्यः ॥१३॥
गिरा वज्रो न संभृतः सबलो अनपच्युतः । ववक्ष ऋष्वो अस्तृतः ॥१४॥(९२५)

( १३८ )

१-३ वत्स । इन्द्र· । गायत्री ।

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥ १ ॥(९२६)

प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ २ ॥
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधम् ॥ ३ ॥ (९२८)

( १३९ )

१–५ शशकर्णः । अश्विनौ । १ अनुष्टुप्; २–३ गायत्री, ४ बृहती; ५ ककुप् ।

आ नूनमश्विना युवं वत्सस्य गन्तमवसे । प्रास्मै यच्छतमवृकं पृथु च्छर्दिर्युयुतं या अरातयः ॥१॥
यदन्तरिक्षे यद्दिवि यत्पञ्च मानुषाँ अनु । नृम्णं तद्धत्तमश्विना ॥ २ ॥
ये वां दंसांस्यश्विना विप्रासः परिमामृशुः । एवेत्काण्वस्य बोधतम् ॥ ३ ॥
अयं वां घर्मो अश्विना स्तोमेन परि षिच्यते ।
अयं सोमो मधुमान्वाजिनीवसू येन वृत्रं चिकेतथः ॥ ४ ॥
यदप्सु यद्वनस्पतौ यदोषधीषु पुरुदंससा कृतम् । तेन माविष्टमश्विना ॥ ५ ॥ (९३३)

( १४० )

१–५ शशकर्णः । अश्विनौ । अनुष्टुप्, १ बृहती, ५ त्रिष्टुप् ।

यन्नासत्या भुरण्यथो यद्वा देव भिषज्यथः ।
अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥ १ ॥
आ नूनमश्विनोर्ऋषि स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ २ ॥
आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना । आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥३॥
यदद्य वां नासत्योक्थैराचुच्युवीमहि । यद्वा वाणीभिरश्विनेवेत्काण्वस्य बोधतम् ॥४॥
यद्वां कक्षीवाँ उत यद्व्यश्व ऋषिर्यद्वां दीर्घतमा जुहाव ।
पृथी यद्वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ ५ ॥ (९३८)

( १४१ )

१–५ शशकर्णः । अश्विनौ । १ विराट्; २ जगती; ३ अनुष्टुप्, ४–५ बृहती ।

यातं छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत नस्तनूपा । वर्तिस्तोकाय तनयाय यातम् ॥१॥
यदिन्द्रेण सरथं याथो अश्विना यद्वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ २ ॥
यदद्याश्विनावहं हुवेय वाजसातये । यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ ३ ॥ (९४१)

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ ४ ॥
यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥ ५ ॥ (९४३)

( १४२ )

१-६ शशकर्णः । अश्विनौ । १-४ अनुष्टुप्; ५-६ गायत्री ।

अबुध्रमु त्य इन्द्रवन्तो अग्नयो ज्योतिर्भरन्त उषसो व्युष्टिषु । ... 

अभुत्स्यु प्र देव्या साकं वाचाहमश्विनोः । व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥१॥
प्र बोधयोषो अश्विना प्र देवि सूनृते महि । प्र यज्ञहोतरानुषक्प्र मदाय श्रवो बृहत् ॥२॥
यदुषो यासि भानुना सं सूर्येण रोचसे । आ हायमश्विनो रथो वर्तिर्याति नृपाय्यम् ॥३॥
यदापीतासो अंशवो गावो न दुह्र ऊधभिः । यद्वा वाणीरनूषत प्र देवयन्तो अश्विना ॥४॥
प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे । प्र दक्षाय प्रचेतसा ॥५॥
यन्नूनं धीभिरश्विना पितुर्योना निषीदथः । यद्वा सुम्नेभिरुक्थ्या ॥६॥ (९४९)

( १४३ )

( १-९ ) १-७ पुरुमीढाजमीढौ, ८ वामदेवः, ९ मेध्यातिथिर्मेधातिथी । अश्विनौ । त्रिष्टुप् ।

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।
यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥ १ ॥
युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥ २ ॥
को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ ३ ॥
हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ ४ ॥
आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयन्तः सं यद्दे नाभिः पूर्व्या वाम् ॥ ५ ॥
नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ ६ ॥ (९५५)

ऋतस्य। ३–३,५ ( ०रुस्राणमिदं ) ०रुः स्राणमिदं, ०रुस्स्राणमिदं। ४–६ ( सहस्वान् ) सहस्वां। ( तारिषत् ) तार्षत्। ५–२ ( स्वर्णोर्प ) स्वर्णोर्प। ५–३ ( बलं ) बुलं। ५–४ (विद्धि) विद्धि। ५–५ (प्रा वोचं) प्र वोचं। ५–७(०णो अवृणीत) ०णोऽवृणीत। ६–५ ( सृधो ) स्रिधो। ( तर ) तर। ७–२ ( अधस्पदम् ) अधस्पदाम्। ७–४ ( परि मां ) परिमां, परी ?। ( अरातिर्नो ) अरातिर्णो। ७–५ (सुहार्त्तेन) सुहार्त्तेन। (पृष्टी०) पृष्टी०, पृष्टि०। ८–२ ( ०पोच्छन्त्वामि०) ० पोच्छन्त्वमि०। ८–५ ( संदेश्येभ्यः। नमः) संदेश्येभ्यो नमः। (पतये।) पतये। १०–७(०मर्विदः) ०मर्विद। १०–८(०भिरेणसः) ०भिरेनसः। ११–२ ( योऽ३ ) यौ३। ११–५ ( भ्राजो३सि ) भ्राज्यो३सि। १२–१ ( तप्यन्तां ) तप्यताम्। १२–७ (मन्य०) मन्न०,मज्ज०। १४–१ (निःसालां )निस्सालाम्। १४–३ ( सेदिर्न्यु० ) सेदिर्न्युं०। १४–५, ६ ( सदान्वाः ) सदान्वाः। १४ – ६ ( ०सरत् ) ०सरम्। १६–३ ( सूर्यं च० ) सूर्यश्च०। १६–४ ( वैश्वानर ) वैश्वानर। १७।१–७।।१८।१ – ५ ( दुाः ) दा। १९;२०,२१,२२,२३।१–५ ( योऽ३ ) यौ३, यो। २४ – ८ (भरूजि) भरूचि। २५–२ (वृश्चामि) वृश्चामि। २५–३ ( जिहीर्षति ) जिहीरिषति। ( कण्वम् ) कण्वां, कण्वान्। २६–२ ( यच्छ ) यच्छत्। २६–५ ( धान्यं३ ) धान्यं, धान्यं३। २७–५ (०वृकाँ ) ०वृकँ। २७–७ ( प्राशि ) प्राशम्। २८–३ (जनित्राः) जनित्वाः। २९–१ ( देवा ) देवा। ( आयुष्य० ) आयुष्यं०। २९–५ ( द्यावापृथिवी ) द्यावापृथिवी। ( देवा ) देवा, देवाः। २९–६ ( मन्थ०) मथ०। २९–७ ( ऊर्जा ) ऊर्जा। ३०–३ ( ईव ) ईवा। ३१–१ ( दृपत् ) धृपत्। ( क्रिमे०) कृमे। ( क्रिमीन् ) कृमीन्। ( खल्वाँ ) पल्वाँ। ३१–२ ( कुरूरुं०) कुरीरं०,कुरूरं०। ( ०मतृहम् ) मतृहम्। ( अलगण्डून् ) अलाण्डून्। ( सर्वाञ्छ० ) सर्वान् श०, सर्वा छ०। ( वर्चसा )वर्चसा। ३१–३ ( अलगण्डून् ) अलाण्डून्। ( क्रिमीणां ) कृमीणां। ३१–४ ( पार्ष्टेयं ) पार्ष्णेयं। (क्रिमीन् ) क्रिमिम्, क्रिमिन्, कृमीन्। ३१–५ ( ये अ०) ते अ०। (तन्त्रमा) तन्त्र आ०। ३२–२ (पृष्टीरपि) पृष्टीरपि। ३२–५ ( सर्वे ते ) सर्वे ते। ३२–६( कुषुम्भं ) पुकुम्भं, पुकुम्भं, कुषुभं, कुपम्भं। ३३–१ ( छुबुका० ) चुबुका०। ३३–२ ( दोषण्य३मं० ) दोषण्यं३ अं; दोषण्यम्। ३३–३ ( यक्नस्ते ) यक्णस्ते। ३३–५ ( भसद्यं३ ) भसद्यं३, भसद्यं। ३३–६ (मज्जभ्यः) मज्जभ्य। ३३-७ (वीवर्हेण) विवर्हेण। ३५–१ ( दुरिंष्टिः ) दुरिंष्टि। ( नस्तां ) नस्तान्। ३५ – २ ( मघव्यान् ) मघव्यान्। ( नष्टेभिः ) नस्तेभिः। ३५ – ३ (एष तं ) एषस्तं। ३५ – ४ ( पाह्य३ ) पाह्य३। ३५ – ५ (विश्वकर्मणा )

विश्वकर्मणा। ३६ — ३ ( नारी ) नारि, नारीम्। ३६ — ४ (मघवंश्चारुं०) मघवां चारुं०। ( ०रेप प्रियो ) ०रेपः प्रियो। ( पत्याविराध० ) पत्याभिराध०। ३६ — ७ ( गुल्गुल्व० ) गुग्गुल्व०।

## तृतीयं काण्डम्।

१–१ ( अग्निर्नः ) अग्निर्णः। ( कृणवत् ) कृणुवत्। १–२ ( मृणत ) मृणतः। १–३ ( अमित्रसेनां मघ० ) अमित्रसेनां मघ०। ( ०श्रस्मान् छं० ) श्रस्मां छं०। १–६ ( इन्द्रः ) इन्द्र। २–१ ( अग्निर्नौ ) अग्निर्णौ। ( प्रत्येत्तु ) प्रत्येतु। २–२ (वों ध०) वोध०। २–५ (०क्षान्यप्वे ) ०क्षान्यग्वे१, क्षान्यप्वेरे। ३–२ ( सुख्याय )सुख्याय, सुख्याय। ३–३ ( आभ्यः ) आभ्य। ३–४ ( अपरुद्धं ) अवरुद्धं। ( पन्थां ) पथां। ३–५ ( ह्वयन्तु) वयन्तु। ( प्रतिजनाः ) प्रतिजानाः। ( अवृपत ) अवृपत्। ( देवास्ते ) देवास्तें। ४–१ ( पतिरेक० ) पतिरेक०। ४–२ (वृणतां राज्यायि ) वृणतां राज्याय। ४–७ ( वशेह ) वसेह। ५–६ ( रथकाराः कर्मा० ) रथकारा कर्मा०। ६–२ ( शृणीहि ) सृणीहि। ६–३ ( निरभनो ) निरभिन्नो। (०महत्युर्णिवे ) ०महत्यर्णवे; ( ०निर्मींद्धि ) ०निर्भिद्धि; ०निर्भिद्धि, ०निर्भिद्धि। ६–४ (० श्वरांसि० ) श्वरंति। ६–७ ( तेऽधुरा० ) तेंऽधुरा०,तेऽधुरा०। ६–८ ( चित्तेनोत ) चित्तैनोत। ७–२ (गुष्पितं ) गुल्फितं। ७–३ (तेना ते) तेनं ते। ७–४ ( विचृतौ ) विवृतौ। ८–१ ( कल्पमानः ) कल्पमानः। ८–२ ( यथासानि ) यथासामि। ८–३ ( ०दीदायत् ) दीदयत्। (०रिद्धोऽप्रति० ) ॥ रिद्धो अप्रति। ८–६ ( गृभ्णामि ) गृह्णामि। ( कृणोमि ) कृणोतु। ( एतं ) रेतं। ९–१ (द्यौः पिता ) द्यौष्पिता। ९–२ ( अश्रेष्माणौ ) अश्लेष्माणौ। ९–३ ( सृगलं ) शृगलं। ( श्रवस्युं ) श्रनस्यं। ९ — ५(भत्स्यामिं)भत्स्यामिं;भन्त्स्यामिं। (०भिः सरिष्यथ)०भिश्चरिष्यथ। ९ — ६(उर्जहरुः०) उर्जहुः, उर्जहुः। १० — २ (० नन्दन्ति ) ०निन्दन्ति। १० — ५ ( हविष्कृ०) हुविः कृ०। १० — ७ ( दर्वे ) दर्वि। ( यज्ञान्त्सं० ) यज्ञात्सं०। १० — १० (०म्यंग्वा०) ०म्यस्त्वा०। १० — १२ (व्युसहन्त ) व्यपहन्त। ११ — २ (निर्ऋतेरुप०)निर्ऋते उप०। (०स्पार्शमेनं) ०स्पार्षमेनं। ११ — ४ ( हेमन्वान्छ०) हेमंतांछ०, हेमन्तां छ०। ११ — ५, ७ (व्यं१न्ये) व्युइन्ये। (०हुरितरां०) हुरितरां०। (०रान्छतम् ) ०रां छतम्, ०रान्छतम्। ११–६ (युवम्) जुवम्। १२–३ (०स्पन्दमानाः) ०स्यन्दमानाः। १२–४ (उक्षन्०) उच्छं। (०क्षन्तुद्रा ) ०क्षन्ताद्रा, क्षन्नाद्रा, क्षत्नाद्रा। १२–६ ( वृङ्स्त्र ) वस्त्र। १२–७ ( परिस्रुतः )

परिश्रुतः, परिश्रुत। (कलशैरगुः) कलशैरगुः। १२–८ (इमां) इमान्। (समङ्ग्धी०) समङ्क्षी०। १३–१ (नद्योरे) नद्यो१। १३–३ (हि कम्) हिकम्। (वार्नामं) वनोमे। (हितम्) हिकम्। १३–६ (घोषो) गोषो। १४–५ (इहैवोत प्र) इहैवोत प्र। १५-३ (जुहोमि) जुहोमि। १५–४ (विक्रयश्च) विक्रयश्च। १७–२ (श्रुष्टिः) श्रुष्टीः, श्रुष्टिः, श्रुष्टिः। (इत्सृण्य्ः) इच्छुण्र्यः, इच्छिण्र्यः। १७–४ (पूषाभि) पूषा अभि। १७–५ (कीनाशा अनु) कीनाशानु। (सुपिप्पला) सुपिप्पला। १७–८ (वन्दामहे) वदामहे। १८–२ (णुद) नुद। १८–४ (अधः स०) अध स०। १९–१, २ (वीर्य१) वीर्ये३। १९–३ (पृतन्यान्) पृतन्यम्। १९–५ (सुवीरं) सुवीरं। १९–६ (उलुलयः) उलूलयः। १९–८ (शरव्ये अ०) शरव्ये३ अ०। २०–१ (रोहाधा) रोहाथा। २१–१ (० शोर्पधी०) ०शौर्पधी०। २१–२ (आविष्टो) आविष्टो। २१–७ (दिक्ष्व१न्त) दिक्ष्व३न्त। २१–९ (०दाव्य१स्तं) ०दाव्य३स्तं। २१–१० (०शीशमन्) ०शीशमम्। २२–१ (अदित्या) आदित्या। २२–२ (चेततु) चेततुः। (माञ्जन्तु) माञ्जतु। २२–३ (०प्स्व१न्तः) ०प्स्व३न्तः। (येन देवा) तेन देवा। (आयन्तेन) आयं तेन। २३–१ (०यामसि) ०यामसि। २३–३ (तं) त्वं। २३–३ (यान्) याम्। २३–५ (त्वं) त्वं, त्यं। २३–६ (द्यौः पिता) द्यौष्पिता। २४–२ (देवस्तं) देवस्त्वं। २४–५ (समावह) समावहान्, समावहम्। २४–७ (वहतां) वहतं। २५–३ (क्लीहानं) क्लिहानं। २५–४ (व्योपिया) व्योर्पया, व्योर्पया। २६–१,२,३,४,५,६ (ये३स्यां) ये१स्यां। २७–६ (०पतिः श्वित्रो) पतिश्वित्रो। २८–५ (तन्व१ः) तन्व३ः, तन्वा१, तन्वा३ः। (हिंसीन्) हिंसीत्। २९–३, ४, ५ (संमितम्) सामितम्। २९–४ (पश्चापूपं) पश्चापूपं। ३०–१ (सहृदयं) सहृदयं। ३०–२ (शन्तिवाम्) शन्तिवान्। ३०–३ (द्विक्षन्मा) द्विष्यन्मा। ३०–५ (संराधयन्तः) सँराधयन्तः। ३०–७ (०श्रुष्टीन्) श्रुष्टीन्; श्रुष्टीन्; श्रुष्टिं। ३१–४ (वी३ मे) वि१ मे। ३१–५ (वहतं) वहतं।

## चतुर्थं काण्डम्।

१–२ (सुरुचं) सुरुचं। (ह्वारमहं) ह्वारमहं। १–३ (जज्ञे) यज्ञे। (०रुचैः स्वधा) ०रुचैस्वधा। १–५ (बुध्न्यादाष्ट्र) बुध्न्यादाष्ट्र, बुध्न्यादाष्ट्र, बुध्नादाष्ट्र। (जनिष्ठार्थ) जनिष्ठार्थ। १–६ (पूर्व्यस्य) पूर्वस्य। १–६ (जंज्ञे) जंहो। (ससन्नु) ससंनु।

१–७ (बृहस्पतिं) बृहस्पतिः। २–१ (योरे) यो१। २–३ (अह्वयेथाम्) अह्वयेताम्।
२–४ (उर्वे१) उर्वे३। २–६ (आसीत्) आसीत्। २–८ (०स्योल्वं) ०स्योल्वा।
३–२ (०र्पतु) ०र्ष्यतु। ३–३ (अक्ष्यौ) अक्षौ, अक्षौ। (ते व्याघ्र) ते व्याघ्र।
(व्याघ्र जम्भ०) व्याघ्र जंम्भ०। (विंशतिं) विंशतिं। ३–६ (अपिशीर्णा) अपशीर्णा।
४-१ (शेप०) शेपो। ४-३ (विरोहतो) विरोहितो। ४-४ (उच्छु०) उच्छु०।
(पुंसा०) पूपा०, पूंपा०। (०वशिन्) ०वशम्। ४–५ (० शर्मसि) ० श्यर्मसि। ४–७
(ऋमस्वर्श इव रोहितमनवग्लायता) सायण – ऋमस्व ऋप इव रोहिमनु वल्गूयता। ४–८
(अथ ऋप०) अर्थर्पु०। ५–२ (स्वापयु) स्वापयः, स्वापयंः। ५–६ (श्वा) स्वा। ५–७
(स्वर्म) स्वर्मः। ६–३ (० न्विपं) ० न्विपः। (नारूरुप) नारुरूप, नारूरूप।
६–६ (अरसं) अरुसं। ७–२ (०मंघराच्यं) ०मंधराच्यं। ७–३ (पीवस्पाक०)
पीवस्फाक०। ७–४ (शुरमिव) शुरुमिव। (येपन्तं) पेपन्तं। ८–२ (मित्रवर्धन
तुभ्यं) मित्रवर्धनस्तुभ्यं। (ब्रवन्) ध्रुवन्। ८–३ (महत्तद्वृष्णो) महस्तद्विष्णो।
८–६ (०सिचन्नापो) ०सृजन्नापो। ८–७ (० मुप्स्व१न्तः) ० मुप्स्वर्इन्तः; मप्स्वन्तः।
९–१ (स्यास्यक्ष्यम्) स्यास्यक्षम्, स्यास्यक्ष्यम्, स्यास्यक्षुम्। ९–४ (प्रसर्पस्य०)
प्रसर्प्यस्य०, प्रसर्प्पस्य०। ९–७ (पूरुप) पूरुपः। ९–९ (सर्वांजम्भ०) सर्वा जम्भ०।
(० यत्सर्वा) ० यन्त्सर्वा०। १०–४ (आयुष्प्र०) आयुः प्र०, आयुप्र०। १०–६
(तारिषत्) तार्षत्। १०–७ (०प्स्व१न्तः) ०प्स्वइन्तः। (कार्शन०) कर्शन०।
११–१ (०रोर्व१न्त०) ०रोर्वइन्त०। ११–२ (त्रया छको) त्रयान् छको।
११–६ (देवाः स्वरा०) देवा स्वरा०। ११–७ (०ह्रक्रमत) ०ह्रक्रमत्। ११–९
(सप्तऋपयो) सप्तर्पयो। ११–१० (०शंश्वाभि) ०शंस्याभि। १२–१ (रोहण्यसि
रोहण्यस्थनश्छिन्नस्य रोहणी) रोहिण्यसि रोहिण्यस्थश्छिन्नस्य रोहिणी। १२–२ (पेष्टं)
प्रेष्ठम्। १२–३ (मज्ज्ञा) मन्या। (विस्रस्तं) विश्रस्तं। १२–६ (सुपविः) सुप्रविः।
१२–७ (यदि कर्त पतित्वा) यदि कर्तुं प्रति त्वा; यदि कर्तुं पतित्वा; यदि कर्तुं पतित्वा।
१३–२ (आ वातु) आवातु। (व्य१न्यो) व्यइन्यो। १३–४ (त्रायन्तामिमं)
त्रायतामिमं। (असत्) असत्। १४–१ (ह्य१ग्रे०) ह्यइग्रे०। (रोहान्नुरुहु०) रोहा-
दुरुहु०। १४–२ (नाकमुख्यान्) नाकमक्षान्। १४–३ (०त्स्व१ज्योतिं०)
०त्स्वइज्योतिं०। १४–४ (स्व१र्यन्तो) स्वइर्यन्तो। १४–५ (यजमानाः)
यजमाना। १४–८ (दिश्य१ज०) दिश्यइज०, दिश्याइज०। (पाजस्यमिन्त०)

पाजस्यम् । अन्त० । १५ – ५ ( समुद्रतस्त्वेपो ) समुद्रजस्त्वेपो । १५ – ६ ( ०शारैपी ) ०सारैपी । १५ – १२ ( वरुणाव ) वरुण । अव । (अपः सृज ।) अपः सृज वद० । (मण्डूका इरि० ) मण्डूकां इरि० । १५ – १३ ( वाचं ) वार्च । १५ – १५ ( खण्वखा३इ खैमखा३इ ) खण्वखा३ई खैमखा३इ; खर्ण्वखा३इ खैमखा३इ । ( इच्छत ) इच्छतः । १५ – १६ ( सविद्युतं ) संविद्युतं । १६ – ४ ( दिव स्पश: ) दिवः स्पशः । १६ – ६ ( छिनन्तु ) सिनन्तु, शिनन्तु, छिनत्तु छिन्नन्तु । १६ – ७ (श्रंसयित्वा) श्रंशयित्वा, श्रसयित्वा, संसयित्वा । (०बन्धः) ० बन्धः; बन्भः, घ्नः । १६ – ९ (वैस्त्वा) वैष्टा । १७ – १ ( सहस्रवीर्यं ) सहस्रवीर्यां । १७ – २ ( ०यावनीं ) योपनीं ।( समह्योपधी० ) समह्योपधी०, समभ्योपधी०। १७ – ३ ( ०मादधे ) ०माददे । १७ – ४ ( चक्रुस्तर्या ) चक्रुस्त्वर्या । १७ – ५ ( ०जीवितं ) ०जीवत्यं । १७ – ६ ( ०पत्यताम् ) ०पद्यताम् । १७ – ६,७ ( मृज्महे ) मृश्महे । १७ – ८ ( वेनं ) वेनां । ( मृज्म ) मृश्म, मृष्म । १८ – २ (हराद०) अराद०। १८ – ४ ( सहस्रधामन् ) सहस्रधामन् । १८ – ६ ( शशाक ) शशाक । १८ – ८ ( मृज्महे ) मृश्महे । १९ – २ ( त्विपीमती ) त्विपीमते । ( ग्रामोण्यो० ) ग्रामोस्यो० । १९ – ४ ( ०पधेऽपामार्गो ) ०पधे अपामार्गो । १९ – ५ ( शतशाखा ) शतशाखा । ( अस्माँ अभि० ) अस्मँ अभि० । १९ – ६ ( ०चद्यामैति ) ०त्तद्यामैति । १९ – ७ ( ०मच्छपथाँ ) ०मछपथँ । २० – ४ (तयाहं) त्वयाहं । २० – ७ (चतुरक्ष्याः ) चतुरक्षाः, चतुरक्षः । २० – ९ ( यथातिसर्पति ) यथाधिसर्पति ।

२१ – २ ( मुंपायति ) मुंखायति । २१ – ३ ( व्यथिरा ) व्यथिरा । २१ – ४ ( रेणुकंकाटोऽश्नुते) रेणुकंकाटो अश्नुते। ( मर्तस्य ) मर्त्यस्य। २२ – १ ( विशामेक० ) वृपामेक०। ( ०स्तात्रन्धयास्मा ) ० स्तां रन्धयास्मा । २२ – २ ( वर्म्मे ) वर्म्मन् । ( शत्रुं ) शत्रूं, शत्रून् । २२ – ७ ( ० प्रतीकोऽर्वं ) प्रतीकोऽर्प । २३ – १ ( पाश्वजन्यस ) पाश्वजज्ञस्य, पाश्वयज्ञस्य । २३ – ३ ( वर्हिष्ठं ) वर्हिष्ठं । ( ०भगम् । अग्निमीडे ) भगमग्निमीडे । ( रक्षोहणं ) रक्षोहणं । २३ – ५ ( ०मद्योतयन् ) ०मुद्योतयन्, मुद्योतयान् । ( ०यन्युजा ) ०यं युजा, यंन्युजा । २३ – ६ ( स्व१रा० ) स्व३रा० । २४ – १ (वृत्रघ्न) वृत्रघ्नः । २४ – २ (० बाहुर्युयुर्यो) बाहुर्युयुर्यो । २४ – ३ ( मर्दिष्ठः ) मर्दिष्टः । २४ – ६ ( जज्ञे ) यज्ञे । ( ०बुद्धम् ) ०चद्धम् । २४ – ७ ( संग्रामान्नयति ) संग्रामं नयति । २५ – ३ ( रक्षथस्तौ ) रक्षतस्तौ । २५ – ४ (शिमिदां) समिदां, समिधाम् । ( ह्यूर्जेया ) ह्यू१र्जेया, ह्यूर्जेया । ( सुजयः सं) सुजय सं० । २६ – २

(प्रवृद्धे) प्रविद्धे। २६—५ ( ये उस्रियां ) य उस्रियां।२७—१ ( ०ते अवन्तु )०तेऽवन्तु। ( आशूनिव ) अंशूनिव। २७—३ ( शग्मा ) शक्मा। २७—६ ( यूयमींशिध्वे ) यूयमीशध्वे। २८—२ ( ०मसिंष्ठौ ) ०वसिंष्ठौ। २८—६ ( ०धत्तं ) घत्तां। २९—२ ( गच्छंथो ) गच्छंतो।( यावगस्ति ) यावगस्त्यं। २९—५ ( गविष्ठिरं ) गाविष्ठिरम्। ३०—६ (द्रविणा) द्राविणं, द्रविणां। (सुम्राव्याई ) सुम्राव्यार्, सुम्राव्ये। ३०—७( तिष्ठे ) चष्टे। ३१—२ ( सहस्व ) सहस्व। ( ०नीर्नैः ) ०नीर्णैः। ( हुत ) हुत। ३१—३ (०तिमस्मै ) तिमस्मे। ( रुरुध्रे) रुरुध्रे। ३१—४ ( ईडिता ) ईडितो। ३१—६ (मेधेधि) मेधोधि। ३२—२ (मन्युर्विशे) मन्युं विशे। ३२—५ (अक्रतुर्जि०) अक्रतुर्जि०,अक्रतुर्जी०। ३२—६ ( अस्म्युप ) अस्युप। ( दस्यूंरुत ) दस्यूंरुत। ३३—८ ( पर्पा ) परिपा। ३४—५(वाहिष्ठो) वहिष्ठो। ३४—७ ( ददामि ) दधामि। ३५—१ ( ०सा ब्रह्मणेऽपचत् ) ० सा ब्रह्मणेऽपचत्। ३५—४ ( नापुस्ते० ) नापुस्ते०। ३५—५ (प्राणदवान्यु०) प्राणदवां यु०। ३५—७ ( देवपीयुं ) देवपीयं, देवपीयून्। ३६—२ ( दिप्सद० ) दिप्साद०। ३६—४ ( सं म ) सं न। ३६—९ ( लपिता) लिपिता। (दुहितान् जने) दुहितां जने। ३६—१० ( मुच्यते ) मुच्यसे। ३७—३ ( नदीं ) नदी। ( गुल्गुलूः ) गुग्गुलूः। ( प्रमन्दनी ) प्रमोदनी। ( प्रतिबुद्धा ) प्रतिबद्धा। ३७—३, ४, ५ ( तत्परेताप्सरसः ) तत्परेताप्सरसः। ३७—५ ( कर्कर्यः ) कर्कर्यः। ३७—७ ( यामि ) धामि। ३७—८, ९ (शतमृष्टी०) शतपृष्टी०। ३७-८ ( व्यृषितु ) व्यृषित। ३७—१० (ज्योतय) धोतय। ३७—११ (त्रियस्त्वमितो ) त्रियस्तमितो, स्त्रियः। तमितो। ३८—३ ( ०ददाना ) ०दधाना। ( सीपुती ) शेपन्ती। ( प्रहामा० )प्रहाना०। ३८—४ ( प्रमोदन्ते ) प्रमोदते। ३८—५ ( सर्वां लोकान् ) सर्वां लोकान्। ( पर्येति ) पर्येति। ३८—६ ( एह्य० ) एह्य०। ( कर्कीह ) कर्की इह। ३८—७ ( वत्सामिह ) वत्सानिह। ( वत्सां ) वत्सान्। ( वंध्रीमः। यथानाम ) वध्रीमो यथानाम। ३९—२, ४, ८ ( आयुः प्रथमं ) आयुष्प्रथमं। ३९—९ ( नमसा ) मनसा। ४०—४ ( सोममृत्वा ) सोममृत्वा। ४०—५, ६ ( येरे ) येरे। ४०—५ ( भूमिमृत्वा ) भूमिमृत्वा।

## पञ्चमं काण्डम्।

१—३ ( एरयन्ताम् ) ऐरयन्ताम्। १—४ ( गुः ) गुः। १—६ ( उपमस्य ) उपमस्यं। ( नीडे ) नीडे। १—७ ( तन्वीस्तत ) तन्वइस्तत्, तन्वाइस्तत्, तन्वइस्तत्।

१ – ८ (आवर्ष्रततः) आवर्वृततः। १ – ९ (पृणक्ष्य०) पृणक्ष्य। (अमुर) अमूर। (अर्वि वृधाम) अर्वि वृधाम। २ – २ (सस्ति) सस्ति। २ – ३ (पृश्नन्ति) पृचान्ति। २–४ (शुस्मिन्त्स्थि०) शुष्मिस्थि०। २ – ७ (०मासमा०) ०माप्त्यमा०। २ – ९(तन्वे१) तन्व३े, तन्य३े, तन्या३े, तन्वा३े। ३ – २ (नेशत्) नैपत्। ३ – ५ (दैवा) दैवा। (सनिपत्र) सनिपत्र। (एतदरिंद्याः) एतदरिंद्या। ३ – ६ (दैवीः) देवीः। (नः) णः। ३ – ७ (तिस्रो देवी०) तिस्रो देवी०। ३ – १० (उपरिस्पृशो) उपरिस्पशो। ४ – ४ (हिरण्ययी) हिरण्मयी। ४ – ६ (पूरुपं) पुरुपं। ४ – ७ (जातोऽसि) जातोसि, जातोऽसि। ४ – १०(०मक्ष्योस्त०) ०मक्षोस्त, मक्षोत०। (०स्तन्वो३) ०स्तन्वो१। (निष्कर्देवं) निःकर्देवं। ५ – ३ (स्पर्णी) स्वर्णी। ५ – ४ (निष्कृतिः) निःकृतिः। (निष्कधि) निःकधि। ५–६ (निष्कृते) निःकृते।५ – ८ (नामे) नाम। (बभ्रु पिता) बभ्रुः पिता। (श्यावस्तस्य) शावस्तस्यं। ५ – ९ (वृक्षाँ) वृक्षँ। ६ – ५ (न्वे३) न्वे१, न्वे१। ६ – ८ (०मस्मान्दु०) ०मस्मादु०, मस्मान्दु, मस्मादु०,मस्मान्दु०। (घचम्) घत्ताम्। ६ – ९ (ये३स्माँ) ये१स्माँ, ये१स्माँ। ६ – १० (यो३स्मां) यो१स्मां, योऽस्मां, यो१स्मां,योस्मां ७ – ३ (अरातिमनु०) अरातिर्मनु। ७ – ६ (नो अद्य) णो अद्य। ८ – १ (ताँ) वँ। ८ – २ (वीर्यै१) वीर्ये३। ८ – ४ (०तिसरा) ०तिसरा। ८ – ८ (कृण्वे३) कृण्वे१। (०मूंर्छ्म०) ०मूर्न्छम०। ८ – ९ (अत्रैनानिन्द्र) अत्रैणानिन्द्र। (मेधा१हं) मेधा३हं। ९ – ७ (प्राणो३) प्राणो१। ९ – ८ (आयुष्कृदा०) आयुः कृदा०। (०युष्पत्नी) ०युः पत्नी। १० – १, २, ३, ४, ५, ६ (दिशोऽधायु०) दिशोऽधायु०। ११ – १ (पुनर्मघ) पुनर्मघु। ११ – २ (त्वमथर्वन्) त्वमथर्वन्। ११ – ४ (भुवनानि) भुवनानि। ११ – ५, ७ (ह्वा१ङ्ग) ह्वाङ्ग। ११–५, ६ (अन्यदस्त्येना) अन्यदस्त्येनाअन्यदस्तेना। ११ – १० (नौ) नो। ११ – ११ (स्तुवते सुमेघाः) स्तुवते सुमेधाः। (नो असि) नोऽसि। १२ – २ (स्वदया) स्वदर्या, स्वधर्या। १२ – ४ (वृज्यते) वृज्यसे। १२ – ७ (मिर्माना) मिमान। १२ – ८ (मनुष्वदिह) मनुष्यदिह। १३ – ४ (अहं म्रि०) अहंम्रि०। १३ – ५ (विपे) मिपे। (रंमध्वम्) रंमध्वम्। १३ – ८ (०सिंकन्या) ०सिंकन्यां, सिंकन्याः। १३ – ११ (तस्तु०) तसु०। १४ – ३ (रिश्यस्येव) ऋश्यस्येव। १४ – ४ (णय) नय। १७ – ३ (ग्राह्य आधि) ग्राह्य आधि। १७ – ५ (जुहु१) जुहु३। १७ – ६ (०स्यापनीता) स्योपनीता। १७ – ९ (राजन्यो३) राजन्यो१। १७ – १७ (येऽस्या) येऽस्या। १७ – १८

( ब्राह्मणो ) ब्रह्मणो । १८ – ३ ( आविविष्टि० ) आविविष्ठि० । १८ – ४ ( ०वारंब्धो ) ०वारंब्धो । १८ – ५ ( उभे एनं ) उभ एनं । १८ – ७ ( मल्वः ) मल्वः, मल्वः । ( स्वाद्वी ) स्वाद्वी । १८ – ८ ( ०र्धनुर्भिर्दुव० ) ०र्धनुर्भिर्दुव० । १८ – ९ ( शरव्यां ) शरव्यां । १८ – ११ ( तान् ) तां । १८ – १२ ( भूमिर्व्यधूनुत ) भूमिर्व्यधूनुत । १८ – १४ ( हन्ताभि ) हन्ताभि । १९ – १ (०वर्धन्त) ०वर्धयन्त । (सृञ्जया) सृर्जया । १९ – २ ( ० दुमर्वि० ) दुम्रर्वि० । १९ – ३ ( ०छुल्क ) छुक्ल, शुल्क । ( अस्नस्ते ) अस्नस्ते । १९ – ४ ( यावत्साभि ) यावत्सार्भि । १९ – ११ ( भूमिर्व्यधूनुत ) भूमिर्व्यधूनुत । २० – १ ( ज्येष्यञभि ) ज्येष्यञभि । २० – २ ( ध्रुवयो ) ध्रुवयो । (वासितामिन्न) वासितामिन्न । २० – ६ ( जज्ञमानो ) जज्ञनानो, जज्ञमानो । २० – ७ ( घोपों ) घोपं । २० – ८ ( ० रुमित्रों ) ० रुमित्रं । २० – १० ( अद्रि० ) अध्रि०, अद्र० । २२ – २ ( न्यङ्ङ्घराट् ) न्यङ् घराड्, न्यङघराड्, न्यङ्घराड् । २२ – ४ ( हिंणोमि ) हिंणामि । २२ – ५ ( ०स्तकमंस्ता० ) ०स्वकमंस्ता०, स्वकमन् स्ता० । २२ – ७ ( प्रफर्व्यी ) प्रफर्व्यी । । ( तां तं० ) तांस्तं० । २२ – १० ( ०तयुस्ताभिः स्म ) ०तयुस्ताभि स्म । २२ – १२ ( स्वसा ) स्वसा । ( पाप्मा ) पाप्मा । २२ – १४ ( ग्रैष्यन् ) ग्रैष्यं, ग्रेष्यं । ( दधासि ) दध्मसि । २३ – १ (क्रिमिं ) क्रमिं । २३ – ४ (कोकं-श्व ) कोकंश्व । २३ – ८ ( नंदनिमोत ) नंदनिमोत । २३ – ९ ( पृष्टीरपि ) पृष्टीरपि । २३ – १२ ( सर्वे ते ) सर्वे ते, सर्वे ते । २४ – ३ ( दातृणा० ) दात्राणा० । २४ – ५ ( घृष्टयाधि० ) घृष्टया अधि० । २५ – १ ( गर्भस्य रेतोधाः ) गर्भस्य रेतो धाः । २५ – ६ (वेदु ) वेदु । २५ – ८ ( वीर्यस्व ) वीडर्यस्व । २५ – ९ ( जिहीप्न ) जहीप्न । २६ – ५ ( मरुतः ) मरुतः । २६ – ९ ( न्रीस्मा ) न्रीस्मा । २६ – १२ ( याह्व-र्वाड् ) याह्वर्वाड् । २७ – ३ ( नराशंसो ) नराशंसो । २७ – ८ ( यजते ) रजते । २७ – ९ ( दैवा ) दैव्या । २८ – १ ( विष्ठितानि ) विष्टितानि । २८ – ३ ( ०वृर्ति ) ०वृर्ति, ०वृर्तिः । २८ – ४ ( ०मादित्या ) ०मादित्या । २८ – १० ( ०स्व्युत्तरो ) ०स्युत्तरो । २८ – ११ ( मन्यतां ) मन्यन्तां । २८ – १२ ( घृतत्र० ) घृतत्र० । २८ – १४ ( भिन्दत्स० ) भिन्दन्स०, भिन्दन्त्स० । ( सहते ) महते । २९ – ४ ( यविष्ठ ) यविष्ट । २९ – ६,७,८,९ ( ०गदोयु० ) गदोयु० । २९ – १५ (तार्ष्टाघीरग्ने)तार्ष्टाधीरग्ने । ३० – १ ( पितृनसुं ) पितृणसुं । ३० – ३ ( पुंसे आर्चे ) पुंसेऽर्चे० । ३० – १४

( मा नु ) मा नुं । ( गान्मा नु ) गान्मा नु । ३० – १५ ( मा ) मो । ३१ – १० ( पुथेतः प्र ) पुथेत प्र ।

## षष्ठं काण्डम् ।

४ – ३ ( र्णं ) नं । ( द्यौ३ष्पितं० ) द्यौ१ष्पितं०, द्यौष्पितं० । ६ – १ ( योऽस्मान् ) यो१स्मान् । ६ – २ ( सुशंसिनौं ) सुसंशिनौं । ७ – १ ( तेना ) तेनां । ८ – ३ ( पर्यैति ) पर्यैति । ९ – १ ( तन्वं१ ) तन्वं३ । ( वाञ्छाक्ष्यौ३ ) वाञ्छाक्ष्यौ१। ११ – १ ( पुंसुवनं ) पुंसवनं । ११ – ३ (०मन्यत्र ) ०मन्यत्रं । १२ – ३ ( मध्वा पृञ्चे ) मध्वा पृञ्चे । ( नद्य१ः ) नद्य३ः, नद्या१। ( शमास्ने ) शमास्ते । १३ – १ ( विश्यानां ) विष्याणां । १३ – ३ ( मूलेभ्यो ) मूलेभ्यो । १५ – १ ( उपतिरस्तु ) उपस्तिरस्तु । (सो३) सो१, सो । १६ – २ ( स हिंनु त्वमसि ) स हिंनुस्त्वमसि; स हि न त्वमसि । १८ – १ ( हृदय्यं१ ) हृदय्यं१, हृदयं, हृदय्यं३ । १८ – २ (०मनस्तरा) ०मनस्तरां, ०मनस्तर । १८ – ३ ( दृतेरिव ) नृतेरिव । २१ – ३ ( रेवतीर० ) रेवतीर० । २२ – २ ( सिश्वथा ) सिश्वता । २२ – ३ ( उदप्रुतौ ) उदप्लुतौ । ( तुन्दाना) तुदाना । २३ – १ (वरेण्यक्रतु०) वरेण्यक्रतु। २४ – २ (निष्करन्) निःकरन्, निष्कराद् । २४ – ३ (नद्य१) नद्य३ । २५–२ (सप्त) सर्त । २७–२ (निष्कृतिं) निःकृतिं, निर्कृतिं। २८ – १ ( पथिष्ठः ) प्रथिष्टः, पतिष्ठः । २८ – २ ( परीमेऽ ) परीमे१ । (०मर्पतु )० मरिपतु । २८ – ३ ( यो३ ) यो१ २९ – ३ ( गृहे ) गृहे । ३० – २ ( शतवल्शा ) शतवल्शा । ३१ – २ ( रोचना अस्य ) रोचनास्य । ( स्वः ) सुवः । ३१ – ३ ( त्रिंशद्धामा ) त्रिंशद्धाम । ३२ – १ ( जुहुता ) जुहुता । (स्वे३तद् ) स्वे१तद् । ३२ – २ ( अशरैत् ) अशरीत् । ( पिशाचाः ) पिशाचाः । ३३ – ३ ( विद्मो ) वित्तमो । ३४ – २ ( निजूर्वे० ) निर्जूर्वे० । ३४ – ४ (अग्निरंजा) अग्निरंजा० । ३५ – २ ( न ) नु । ३६ – २ ( विश्वा प्रति ) विश्वाः प्रति । ३७ – २ (हृदमु०) हृदमु०, इदमु० । ४० – १ ( स्तुवै१ ) स्तुवै३ । ( सप्तऋषी ) सप्तर्षी । ४० – २ ( अशत्रुरिन्द्रो ) अशत्रिन्द्रो, अशत्विरिन्द्रो । ४१ – ३ ( मर्त्यां ) मर्त्ये । ४२ – १ ( संमनसौ ) सौमनसौ । ४३ – ३ ( मुख्यां नया० ) मुख्यान्नया० । ४५ – १ ( कामये ) कामये । (वृक्षां) वृक्षं, वृक्षान् । ४६ – १(०गर्भोऽसि ) गर्भोऽसि । ( पितारुरु० ) पितारुरु० । ४६–३ ( दुष्वप्न्यं ) दुःष्वप्न्यं । ४९–२ ( चोर्वच्यसे ) चोर्व्यच्यसे । ४९ – ३ ( निष्कृतिं ) निःकृतिं । ( पुरू ) पुरु । ५० – १ ( ०मश्विना)

०र्मश्विना । (छिन्तं) छिन्त्तं, छिर्त्तं, छिन्नं । ५० — २ ( जम्यु ) जंम्यु । ५० — ३ (सर्वान्ज०) सर्वा ज० । ५१ — १ ( प्रत्यङ् ) प्रत्यक् । ५१ — २ ( घृतप्यु॒ः ) घृतप्युः । ५२ — १ ( निजूर्वन् ) निजूर्वेत् । ५२ — २ ( न्यु३ ) न्यु; न्यू । ५२ — ३ (आभारिषं) आभार्षं । ५५ — २ ( ०द्रुर्पाः स्विते ) ०द्रुर्पा स्विते । ५६ — १ ( ०पूरुपान् ) पूरुपान् । ( ष्परद्यात्तं ) ष्परद्यात्तं । ५७ — २ ( सिश्चत ) सिश्चतम् । ५९ — २ ( ०यक्ष्माँ ) ०यक्ष्मां । ५९ — ३ ( विश्वरूपां ) विश्वरूपम् । ६० — १ ( ०तस्तुपः ) तस्तुपः, तस्थुपः, तस्तुपः । ६०-३ ( घातास्या ) घातास्या । ६२ — १ ( द्यावापृथिवी ) द्यावापृथिवी । ६३ — १ [ ०विमोक्यं ] विमोक्यम् । ६३ — २ ( वृता ) वृता । ६६—१ ( मर्मर्पयेन्द्र ) समर्पयेन्द्र । ( विविद्धः ] विविधः । ६६ — २ ( आयच्छन् ) आयच्छन् । ( शत्रवः ) शत्रन । ( पराशरीत् ) पराशरीन् । ६६ — ३ ( सन्तु ) सन्तु । ६७ — २ ( अमित्राश्व० ) अमित्राश्व० । ७० — १ ( वृषण्यत ) वृषण्यतः । ७१ — २ ( मनुष्यैः ) मनुष्यैः । ७२ — १ ( वशाँ ) वशं । ७२ — २ [ पर्मस्ता० ] पशस्ता० । ७३ — १ ( संमनमः ) समनमः । ७३ — २ ( तान्त्सीं० ) तान्छीं०, तां छीं०, तान्श्रीं, तां श्री० । ७४ — १ ( तन्नं१ः ) तन्नाइेः, तन्नाइे, तन्ना, तन्नइेः । ७४ — २ ( अर्हणीय० ) अर्हणीय० । ( त्रिणाम० ) त्रिणाम०; त्रिनाम० ( इमान्जनान् ) इमां जनान् । ७५ — ३ ( जनाँ अति ) जनां अति । ७६ — ४ ( सर्वां अव ) सर्वां अव । ७७ — १ ( अस्थु स्था० ) अस्थुः स्था० । ( स्थाम्न्यश्वाँ ) स्थाम्न्यश्वां । ७७ — २ ( अपि ) अपि । ७८ — २ ( स्तामर्तु० ) स्तामर्तु० । ७८ — ३ ( ०मायुः कृणोतु ) ०मायुष्कृणोतु । ७९ — २ ( आ पुष्टमेत्वा ) आपुष्टमेत्वा । ८४ — १ ( ०प्रमन्वते ) प्रवन्वते । ८४ — ३ (प्नं१स्म०) प्नंस्म०, प्नास्म०, प्नाइस्म । ८७-२ ( इन्द्र इहेह ) इन्द्रेहेह । ८८— ३ ( शत्रूंन्छत्रू० ) शत्रूंछत्रू० । ८९—२ ( सध्र्य१ङ् मा ) सध्र्याङ्मा, सध्र्यञ्चा, सध्र्यङ्माँ । ९१—१ ( पाचीनमर्प ) पाचीनमुर्प । ( व्यये ) द्वये । ९१-२ ( न्यं१ग् ) न्यग्, न्यङ्ग् । ९२—२ ( पारयिष्णुः ) पारयिष्णुं, पारयिष्णु । ९२—३ ( तन्नं१ ) तन्नं३ । ( देवो ) देवा । ९३—१ ( शर्वोऽस्ता ) शर्व्योऽस्ता, शर्व्योऽस्त्रा, शर्वोऽस्त्रा । ९५—२ ( पुर्पं ) पुर्ष्यां । ९६—२ ( पड्डीशा० ) पड्डीशा०, पड्डीशा० । ९७—१ ( अभ्य१हं ) अभ्या१हं०, अभ्याइहं० । ९७—२ ( पिन्वतम् ) पिन्वत । ९८—३ ( वृत्रहन्छ० ) वृत्रहं छ० । ( ऐपि हव्यः ) ऐपि हव्यः । ९९—२ ( दध्मः ) दध्मः । ९९—३ ( दध्म ) दध्म । १०० — २ ( उपजीका ) उपजीका । १००—३ ( चंकर्थारमं ) चंकर्तारमं । १०१—१ ( यथाहं )

यथाङ्गं । १०१–३ ( क्रमस्वर्शं ) क्रमस्व ऋप । १०२ – २ ( पृष्ठ्यामिव ) पृष्ठ्यामिव । १०२ – ३ ( हस्ताभ्याम० ) हस्ताभ्याम० । १०४ – २ ( ऐनान् ) ऐनाम् । १०५ – १ ( पतु ) पत । ( कासे ) कासे । १०६ – १ ( रोहतु ) रोहन्तु । ( पुष्पिणीः ) पुष्पिणीं । १०६ – ३ ( शीतह्रदा ) शीतह्रदा । (०शिष्कृणोतु ) ०शिः कृणोतु । १०७ – १–४ ( नः स्वम् ) न स्वम् । १०८ – ४ ( विदुः ) विदुः । १०९ – १ ( पिप्पली ) पिप्पली। ( ०भेषज्यु३० ) भेषज्यू१० । ( ता देवाः ) तां देवाः । १०९ – २ ( पिप्प० ) पिप्प० । ( ०ल्य१ः ) ०ल्या१, ०ल्य१ः । ११० – १ ( कर्मीर्ध्यौ ) कर्मीर्ध्यौ । ११० – ३ (स) स । १११ – १ ( अतोऽधि ) अतोऽधि । १११ – २ ( यथानु० ) यदानु० । ( ०तोऽससि ) ०तोऽसति । १११ – ३ ( दैवेन० ) दैवेन० । ( यदानु० ) यदानु० । ११२ – १ ( स ) सं । ११२ – ३ ( ०अङ्ग ) ०अङ्गे । ( उत्सितश्च ) उत्थितश्च, उत्सितं च । ( नि ते मु० ) नि तैं मु० । ( मुंचयन्तां ) मुञ्चन्तां । ११३ – १ ( त्रिते ) तृते । ( एनन् ) एनम् । ११३ – २ ( तान्वि नंश्य ) तान्वि नंश्यन्, तान्विनश्यन् । ११३–३ ( त्रितस्या० ) तृतस्या० । ११४ – २ ( नोपशेकिम ) नोपशेकिम । ११४ – ३ ( विश्वे ) विश्वे । ( शेकिम ) शेकिम । ११५ – १ ( सजोषसः ) सजोषसः । ११७ – १ ( चरामि ) चरामसि । ११७ – २ ( दद्म ) दद्म । ( धान्यं१ ) धान्यां३ । ११८ – १ ( गन्तु० ) गन्तु० । ११९ – ३ ( यत्त्रैनो ) यत्त्रैनो । १२० – २ ( लोकात् ) लोकान् । १२० – ३ ( तन्वा१ः ) तन्वा३ः । १२१ – १ ( दुष्वप्न्यं ) दुःष्वप्न्यं । ( नि ष्पास० ) निः ष्पास० । १२१ – २ ( रज्जां ) रज्वा । १२२ – २ ( चेच्छिक्षान् ) चेच्छिक्षान् । ( स स्वर्गे ) सः स्वर्गे । १२३ – ३ ( आस्मि ) अस्मि । १२४ – १ ( अभ्यपम० ) अभ्यपम०, अभ्यपम । १२४ – २ ( ०क्षतन्वो३ ) ०क्षतन्वो१ । १२५ – २ ( गोभिरावृत० ) गोभिराभृत० । १२७ – २ ( चीपुद्रु० ) चीपद्रुः । १२८ – ३ ( राजन् छर्क० ) राजं छर्क० । १२८ – ४ ( भद्राहमकरः ) भद्राहमंकरः । १२९ – १ ( शांशपेन ) शांशफेनं । १२९ – २ ( वृक्षां ) वृक्षां । १३० – १ ( राथजितेयीनाम० ) राथजितेथीनाम०, रथजितेयीनाम० । १३०।१ – ४ ( शोचतु ) शोचतौ । १३१ – १ ( आध्यो३ ) आध्यो१ । १३१–३ ( त्रियोजनं ) त्रयोजनं । १३२।१ – ५ ( ०प्स्त१न्तः ) प्स्त३न्तः । १३३ – ३ ( भुवात् ) भूतान् । १३६ – २ ( प्रत्ताञ्जनयाजाताञ्जातानु ) प्रत्तां जनयाजातां जातानु । १३६ – ३ ( तं ) तां । १३८ – ३ ( कृम्यं ) कृवं । १३९ – १ ( सुभगं० ) सुभागं० । १३९ – ३ ( अमूं ) अमूं ।

१३९ – ४ ( पुशुष्यंत्या० ) पुशुष्यंत्ता०   १४० – ३ ( तुन्वं: ) तुन्वा ३ुः, तुन्वा१ः, तुन्व३ुः ।   १४१ – ३ ( ०दैवासुरा ) ०दैवसुरा, ०दैवासुरा ।

## सप्तमं काण्डम् ।

१–२ ( स्व१ः ) स्व३ुः ।   २–१ ( चिकेत प्र ) चिकेतः प्र ।   ३–१ ( विष्ठा ) विप्पा । ( ०मैरयत ) ०मैरयत्, ०मैरयन्त ।   ४–१ ( सुहुते ) सुहूते ।   ५–३ (०मर्त्येन) ०मर्त्येन ।   ५–४ ( अतन्वत ) अतन्वत । ( अस्ति ) अस्थि ।   ५–५ ( पुरुधार्य० ) पुरुपार्य० ।   ७–१ ( ०कारिपमर्व ) कार्पमर्व० ।   ९–३ ( वयं न ) वयं ना ।   ९–४ ( परस्ताद् ) पुरस्ताद् ।   ११–१ ( ०स्तुयं ऋष्गो ) ०स्तुयों ऋष्गो, स्तुयों रिष्गो ।   १२–१ ( शिक्षाचारु ) शिक्षाचारू । १४–१ (ओण्योः ) ०ओण्योः । (सत्यसर्व) सत्यसर्वा । १४–२ ( यस्यामति० ) अस्यामति० । ( कृपास्वः ) कृपा स्वः ।   १४–३ ( सवितर्वार्याणि ) सवितर्वार्याणि ।   १५–१ ( सुचित्रामाहं ) सुचित्रामहं ।   १८–१ ( भिन्धी३दं दिव्यं ) भिन्धीदं दिव्यं, भिन्धीदं दिव्यं । ( उद्नो ) उत्नो, उम्नो, उत्नो ।   २०–५ ( ह्यस्याः ) ह्यस्याः ।   २१–१ ( वर्तनि० ) वर्तनि०, वर्तनी० ।   २५–२ ( वि च ) वि च ।   २६–१ ( कं प्रा ) कं प्र ।   २६–२ ( तद्विष्णु स्त० ) तद्विष्णुः स्त० ।   २८–१ ( परशुर्नेदिः परशुर्नेदिः ।   ३१–१ ( ०मेघरन्छर ) ०मेघरन्छर, ०मेघरन्छर ।   ३४–१ ( ०जाताञ्जात० ) ०जातां जात० । ( नागसस्ते ) नागसस्ते ।   ३५–१ ( ०जातान् जात० ) ०जाता जात० । ( पिपृहि ) पिपृहि ।   ३५–३ ( स्रुतुः ) स्रुतुः । ( अस्न१ ) अस्नं० ।   ३८–४ ( वदामि ) वदानि । ( ममेदसस्त्वं ) ममेदसस्त्व ।   ४०–१ ( पुष्टपति० ) पुष्टिपति० ।   ४०–२ ( दाश्वसं ) दाश्वांसं । ४४–१ (इन्द्रश्च) इन्द्रश्च । ४५–१ (दूरात्त्वा) दूरात्त्वा । ४५–२ (०मुन्ना) मुन्ता०, ०मुत्रा०, ०मुत्ना० । (०मिमिव) ०मिमिव ।   ४६–१ (देवानाम०) देवानाम० ।   ४८–२ (सहस्रपोषं) सहस्रपोषं । ४९–२ (०रिन्द्राण्य१०) ०रिन्द्राण्य३० । ५०–४ (वृतमस्मा०) वृतमस्मा० । ५२–२ ( युंग्महि ) युंस्महि, युंछ्महि । ( उत्स्युं० ) उत्स्युं० ।   ५३–१ ( बृहस्पतेरभिशस्तेरमुञ्चः) बृहस्पते अभिशस्तेरमुञ्चः, बृहस्पतेरभिशस्तेरमुञ्चः ।   ५३–४ ( अपानो० ) अपानो० । ( सप्तर्षिभ्यं ) सप्तऋषिभ्यं । ५४–१ ( यन्छतः ) गच्छतः ।   ५४–२ ( पृष्टः ) पृष्ठः ।   ५६–२ ( मधुजाता ) मधुजाता । ( मशकुजम्भनी ) मशकुजम्भनीः ।   ५६–३ ( तृप्रदंशिनी ) त्रिप्रदंशिनी ।   ५६–४ ( ब्रह्मणस्पत ) ब्रह्मणस्पते । ( नमः ) नम ।

५६–५ ( ह्यंुस्या० ) ह्युंस्या० । ( ०जमम् ) जगमम् ५६ – ७ ( मयूर्यः ) मयूर्यैः । ५६–८ (आस्येरे) आस्येो । ५७–१ ( यदात्मनि ) तदात्मनि । ( तदा पृणद् ) तदा पृणद् ) ५८–१ (अध्वरो) अध्वरं । ६०–३ ( प्रवसन्येपु ) प्रवसन्त्येपु, प्रवसन्नेपु । ६०–५ (नः) णः । ६१–१ ( प्रियाः श्रु० ) प्रिया श्रु० । ६२–१ ( पत्नीनं० ) पत्नीनं० । ६४–१ ( पान्त्वंहसः ) पात्वंहसः । ६५–१ ( त्वमपा० ) त्वमपा० । ६५–२ ( यद्दुष्कृतं ) यद्दुः कृतं । ( त्वया ) तया । ( मृज्महे ) मृग्महे । ६६–१ ( यदश्र० ) यदस्र० । ७०–३ ( हतां ) हता, हतान् । ( ०धायति ) धायन्ति । ७०–४ ( ०म्यास्यम्ग्नि ) म्यास्यन् । ७०–५ ( अपि ) अपं । ७३–१ ( पुरुद० ) पुरुत० । ७३–४ ( धर्तारा निदथस्य ) धर्तारा निदर्थस्य । ७३–६ ( गोधुगोपमा ) गोधुगोपमा । ( वरेण्योऽनु० ) वरेण्योऽनु० । ७३–७ ( प्र वोचत् ) प्रं वोचत् । ७४–३ ( मन्युष्टे ) मन्युस्ते । ७४–४ ( त्वं व्रत० ) त्वां व्रत० । ७५–२ ( पद्वा ) पद्वाः । ७६ – २ ( ग्रैव्या अप० ) ग्रैव्या अप० । ७६ – ३ ( कीकसाः ) किकसा । ( प्रशृणाति ) प्रसृणाति । (तलीद्यमि० ) तलीचमं० । ( निर्हास्तं ) निरास्तं । ७६–५ ( विश्व ) निद्या । ७७ – २ ( सस्तर्पिष्ठेन ) मतर्पिष्ठेन । ७८ – २ ( दीदिहि१ ) दीदिहि३ । ७९ – १ (अकृण्वन्भाग०) अकृण्वन्ङ्काग० । ७९ – २ ( ०मागास्याइ) ०मागास्या१ । ८०–४ ( ते नाके ) ते नाकें । ८१-१ ( यातोऽर्णवम् ) यातो अर्णवम् । (०क्रतूंरन्यो ) ०क्रतूंरण्यो; ०क्रतूरन्यो । ( ०ज्ञायसे) ०ज्ञायते । ८१-४ ( दर्शतोऽसि ) दर्शतोऽसि । ८१–५ ( योऽस्मान् ) योस्मान्, यो१स्मान् । ( प्याशिपी० ) प्यायिपी० । ८२-२ ( मग्यग्रे ) मग्यग्रें । ८२–६ (देवी-नैप्त्र्य१ ) देवीर्नप्त्र्यं, देवीर्नप्त्र्य३ । ८३–१ ( मिथः ) मितः । ( धामानि ) दामानि । ८३—२ ( धाम्नोधाम्नो ) दाम्नोदाम्नो । ८३—३ ( अधा ) अर्था । ८३—४ ( दुष्व-प्न्यं ) दुःष्वप्न्यं । ( नि ) निः । ८९–४ (०स्येधिषीय ) स्येधिपीय । ९०—३ ( क्रदी-वतः ) क्रदीवतः । ९१–१, ९२–१ ( स्वर्ग्गों ) स्वर्गे, स्वर्गं । ९३–१ ( ध्याम ) स्याम । ९५–३ ( आतोदिनौ ) अतोदिनौ, अतोदिनौ, आतोदिनौ । ( इतः ) इत । ( पुमाञ्ज० ) पुमाँ ज० । ९६ -१ ( अस्थुः स्था० ) अस्थु स्था० । ( वृकावति० ) वृकावति० । ९७- १ ( प्रयति ) प्रयती । ९७- २ ( नो ) णो । ( स्वस्त्या ) स्वस्त्यां । (ब्रह्मणा) ब्रह्मणां । ९७–४ ( भरमाणाः स्वा ) भरमाणा स्वा । १००–१ ( परा स्वप्न० ) पराः स्वप्न० । १०२- १ ( मेध्या० ) मेघ्या०, मेक्ष्या० । ( ०स्तिष्ठन् ) ०स्तिष्ठन् । १०३ -१ ( द्रुहोऽन्यद्य० ) द्रुहोऽन्यद्य० । १०४ – १ ( सख्यं जुपाणो ) सख्यं जुपाणो । १०८-१

